॥ अथ श्रीमदनुव्याख्यानटिप्पणी ॥

# ॥ नयचन्द्रिका प्रारभ्यते ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ विष्णुं सम्पूर्णविज्ञानपरमानन्दविग्रहम् ॥ कमलाकान्तमत्यन्तमन्तर्बहिरुपास्महे ॥ १ ॥ श्रीमन्नारायणाख्यानं सज्ज्ञानानन्दलक्षणम् ॥ वेदान्तवेदितौदार्यं मुख्यं ब्रह्म प्रतन्महे ॥ २ ॥ येन गोवर्धनछद्मछत्रेणात्रायि गोव्रजः ॥ कृष्णं तमतसीकृष्णं वन्दे सौन्दर्यवारिधिम् ॥ ३ ॥ नमो वेदान्तराद्धान्तसूक्तिरत्नाकरात्मने ॥ श्रीमदानन्दतीर्थाख्यभगवद्दुग्धसिन्धवे ॥ ४ ॥ त्रिविक्रमार्यवर्याणां गुरूणां पादरेणवः ॥ दिशन्तु शश्वदस्माकं शुद्धिं बुद्धेर्गिरामपि ॥ ५ ॥ तं पद्मनाभतीर्थाब्धिं पद्मनाभप्रियं भजे ॥ सन्न्यायरत्नावल्याख्यायतो मध्वेन्दुबृंहितात् ॥ ६ ॥ अनुव्याख्यासुधाम्बोधौ गम्भीरे विहरन्ति ये ॥ तेषां परमहंसानां पद्मच्छायामुपास्महे ॥ ७ ॥ सन्न्यायरत्नावलयः सन्न्यायामृतबिन्दवः श्रीमत्तत्त्वप्रदीपाश्च सन्तु नश्शरणप्रदाः ॥ ८ ॥ श्रीमद्गुरूणां कारुण्यकल्पवृक्षसमाश्रयात् ॥ अभिप्रायोऽनुभाष्यस्य यावद्बोधमनूद्यते ॥ ९ ॥

नारायणं निखिलपूर्णगुणैकदेहं निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ॥ अस्योद्भवादिदमशेषविशेषतोऽपि वन्द्यं सदा प्रियतमं मम सन्नमामीत्यनेनानुभाष्यमारभमाणो भगवानभीष्टदेवतामभिष्टुवन्नमस्करोति शिष्टाचारपरिरक्षणार्थम् । अनेनैवाधिकारिविषयप्रयोजनानि तत्सम्बन्धं च सूचयति । प्रथमत एव प्रयोजनस्यावगतौ प्रवृत्तिस्सम्भवतीति तत्सूच्यते । अस्योद्भवादिदमित्यादिशब्देन मोक्षस्यापि विवक्षितत्वान्निर्दुःखसुखात्मके मोक्षे प्रयोजने सर्वेषामपि प्रवृत्तिः प्रसज्यते । तद्व्युदासायाधिकारिणं विशिनष्टि ॥ **सन्नमामीति** । सन्नमामीत्यष्टाङ्गविशिष्ट एव प्रणामो विवक्षितः । उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरित इत्यष्टाङ्गान्युच्यन्ते । उरआदिना प्रणिपातः । मनसा सद्भक्तिकं स्मरणम् । वचसा वेदमन्त्रवचनम् । एवं च ह्यध्ययनवान्सुभक्तिमानेवाधिकारीत्युक्तं भवति । अहं सन्नमामीत्युक्ते सत्यप्यनन्ताधिकारिण इति सूचितं भवति । वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेति वचनादाचारस्यापि धर्ममूलत्वाच्छास्त्रप्रयोजनं च शास्त्रप्रतिपाद्याद्भवितुमर्हति । तदर्थं प्रतिपाद्यं विषयमपि सूचयति ॥ **नारायणमिति** ।

एवं प्रतिपादकत्वं शास्त्रस्य प्रतिपाद्यत्वं नारायणस्य प्रयोजनं दातृदेयभावं च देयत्वं ग्राह्यत्वं प्रयोजनस्य गृहीतृत्वं चाधिकारिण इति सम्बन्धश्च सूचितः । एतेऽर्था भगवतैव प्रथमसूत्रे ह्याक्षिप्ताः । अथशब्देनाधिकार्यतः शब्देन प्रयोजनं ब्रह्मशब्देन विषयः प्रतिपाद्यप्रतिपादकत्वलक्षणसम्बन्धश्च । नारायणं सन्नमामीत्यन्वयः । निखिलपूर्णगुणैकदेहमित्यादिविशेषणचतुष्टयेनाध्यायचतुष्टयोपदिष्टमुपक्षिपति । निखिलैः पूर्णगुणैरभिन्नदेहं गुणात्मकदेहमित्यर्थः । तत्तत्समन्वयोक्त्या गुणपूर्णत्वमेव हि प्रथमाध्याये विवक्षितम् । द्वितीये तत्तद्विरोधपरिहारेण दोषरहितत्वं विवक्षितम् । तच्चाह ॥ **निर्दोषमिति** । सुवाक्यैः सुष्टुवाक्यैः । आप्यतमं ज्ञेयतमम् । परब्रह्मण्यधिकृततात्पर्यत्वेन सुनिश्चितवेदवाक्याः सुवाक्याः पुरुषः सुवाक्याः । ज्ञानवचनेनैव तत्साधनवैराग्यभक्त्युपायोऽपि सूचितो भवति । अयमेव हि तृतीयाध्यायार्थः । फलाध्यायार्थो मोक्षश्चाशेषविशेषतोऽप्यस्योद्भवादिदमिति सूच्यते । अस्य जगत उद्भवस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षप्रदमशेषैरपि विशेषैः सहेत्यर्थः । सन्ति ह्युद्भवादिविशेषा ब्रह्मादिषु तारतम्यनिबन्धनाः प्रतिक्षणविशेषाश्च मोक्षादिषु देवत्वादियोग्यताविशेषाश्च । अशेषविशेषतोऽपीत्युपरिसम्बध्यते । अशेषैर्ज्ञानानन्दादिभिर्विशेषैश्च सह मम सदा वन्द्यं प्रियतमम् । वन्दनं स्तुतिः प्रणामो वा । वदिअभिवादनस्तुत्योरिति धातुः । अनेनानन्तगुणस्य नारायणस्य प्रवचनमुपास्तौ चात्मनो मुख्याधिकारित्वं सूचयति । भक्तिं च स्नेहबहुमानरूपाम् । अत एव तस्येष्टदेवतात्वं च । प्रियतमत्वस्य विशिष्टे । स्नेहविषयत्वस्य सख्यादिष्वपि सम्भवात्तद्व्यवच्छेदाय वन्द्यमिति ॥ १ ॥ बहुमानविषयत्वं ह्यभिप्रेयते ॥ **तमेवेत्यादिना** । तामेव शास्त्रप्रतिपाद्यामभीष्टदेवताम् । शास्त्रगुरुत्वेन जगद्गुरूणां ब्रह्मादीनां विशेषतः स्वतः स्वगुरुत्वेनापि प्रणम्य ग्रन्थारम्भं प्रतिजानीते । शास्त्रं भावयतीति शास्त्रप्रभवः शास्त्रकर्ता । अञ्जसैव सम्यगेवेत्यनेन सर्वत्रापि मुख्यगुरुत्वं प्रतीयते । परमेत्याख्या यस्या विद्यायाः सा परमाख्यविद्या । ब्रह्ममीमांसेत्यर्थः । अथ परा यया तदक्षरमधिगम्यत इति श्रुतेः । अन्वपि चाहमेव भाष्यकारणमप्यहमेव च व्याख्यां करोमि । अन्यस्य शक्त्यभावादिति चशब्दः । सूत्राणां प्रामाण्यं साधयितुमाप्तिमूलत्वादिकं

दर्शयति ॥ **प्रादुर्भूत इति** । ब्रह्मादीनां शास्त्रगुरूणां गुरुत्वादस्य तद्वचनविरोधो नास्ति । प्रातिकूल्ये स्वगुरुविरोधात्तस्यैवाप्रामाण्यप्राप्तेः । शास्त्राणां भारतादीनां प्रभवत्वादस्य न तद्विरोधोऽपि । एवंभूतो बादरायण इति यतोऽतस्तदुदितमाप्तिमुलत्वेन मानम् । तदर्थतस्तत्प्रयोजनाय । तथा हि । हरिरेव व्यासरूपो वक्ता । ज्ञानवक्त्रभावादापदि विरिञ्चादीनामर्थनाप्रसङ्गोऽतस्त एवाजादयः श्रोतारोऽपि । ननु भगवताऽजाद्यर्थनाप्रसङ्गे तेभ्य उदितमित्येतावता कथमाप्तिमूलत्वमित्यत आह ॥ **वक्त्रीति** । वक्तृश्रोतृप्रसक्तीनामनुकूलताऽऽप्तिरिति यत्तस्मादेव । अनुकूलताऽऽप्तिरित्युक्तेऽनुकूलतयाऽऽप्तिरित्यर्थः । स वै बलं बलिनां चापरेषामितिवन्निमित्तनैमित्तिकयोरभेदव्यवहारसम्भवाद्वक्त्रादीनामेकतमस्याप्यननुकूलत्वेऽप्याप्तिर्न सङ्गच्छते । जिनादिवक्तृवाक्यानामप्रामाण्योपलब्धेः । नर्मादिप्रसङ्गे स्त्रीजने श्रोतरि वाऽनृतवचनस्यादूषणत्वाच्च । न नर्मयुक्तमनृतं हिनास्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानीति भारतोक्तन्यायेनाप्तवाक्यतया श्रुतिभिर्लिङ्गैश्चार्थनिर्णायकत्वाच्छ्रुतिमूलतया युक्तिमूलतया चैकधाऽन्यत्र गौतमादिसूत्रेषु स्वयं कृताऽपि तद्व्याख्याभाष्यरूपेण तत्र न किञ्चिदप्यनुक्तम् । तथाऽपि पुनः क्रियते स्पष्टतार्थतः स्पष्टत्वप्रयोजनाय । **अथातो ब्रह्मजिज्ञासेत्यादि**सूत्रं व्याख्यायते ॥**तत्रेत्यादिना**॥ तत्र परविद्यायां वर्तमानं ताराथमूलत्वं सर्वशास्त्रस्यापीष्यते । न केवलं प्रथमसूत्रस्यापि तदर्थत्वेनानुसन्धेय इत्यर्थः । तारार्थे गुणपूर्णत्व एव सर्वत्र तात्पर्यात् । अथशब्दार्थस्य मङ्गलस्यापि सर्वत्र विवक्षितत्वात् । सर्वत्र शब्दतोऽप्यनुगतत्वादोङ्कारः पृथगेवोच्चार्यते । नाथशब्दवत्सूत्रे निबद्धः । तस्मात्प्रणवानन्तरमध्ययनस्य विरामे सत्येवाध्ययनार्थे पुनरोङ्कुर्वते । स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते । अनोङ्कृतमासुरं भवतीति वचनाच्च । तारब्रह्मशब्दयोरर्थमाह ॥ **ओतत्वेति** । यो नारायणपदोदितो विष्णुः स एवास्य ब्रह्मशब्दार्थ इति । अनयोः शब्दयोर्गुणपूर्तिवाचकत्वेन पर्यायत्वात् । असावोङ्कारश्च तद्गुणोततां वक्ति हि । स एव गायत्रीशब्दप्रतिपाद्यत्वेन भर्गशब्दार्थः । व्याहृतीनां च स एवार्थः । सोऽयं सहस्रशीर्षा पुरुष इत्युच्यते । पापस्य भञ्जनाद्भर्गः

पुरुप्राणत्वात्पुरुषः। षकारः प्राण आत्मेति हि श्रुतिः। एवमोङ्काराद्यशेषवेदार्थभूतोऽयं नारायणोऽत्र जिज्ञास्यो विधीयते। अतःशब्दार्थमाह ॥ **ज्ञानीति**। प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामिति भागवतवाक्यं ज्ञानस्य प्रसादसाधनत्वे प्रमाणम्। तमेवं विद्वानमृत इह भवतीति हि श्रुतिर्ज्ञानस्य प्रसादद्वारेण मोक्षसाधनत्वे यमेवैष वृणुते तेन लभ्य इति प्रसादस्य मोक्षसाधनत्वे। आदिशब्दादात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति जिज्ञासाया ज्ञानसाधनत्वे प्रमाणम्। एवंभूतप्रसादादेवमुच्यत इति यतोऽतो ब्रह्मजिज्ञासा कर्तव्येति। ननु ज्ञानादेवापवर्ग इत्यादेर्ज्ञानस्वभावादेव मोक्षसम्भवात्किं प्रसादेनेत्यत आह ॥ **द्रव्यमिति**। अत्राह। बन्धस्य सत्यत्वे निवृत्त्ययोगान्मुक्त्यर्थं तन्मिथ्यात्वमपेक्ष्यम्। ज्ञानबाध्यत्वाङ्गीकारात् सत्यस्य च तदयोगान्मिथ्या बन्ध इत्यत आह ॥ **अज्ञानामिति**। अत्र ज्ञानानन्तरमपि बन्धमुक्तेर्भगवत्प्रसादसाध्यत्वोक्तेर्न बन्धो मिथ्येति ॥ **तद्वाक्यस्येति**। बन्धो मिथ्येति वाक्यस्यापि स्यात्। किं ममापि सत्यस्य साधकत्वमसिद्धमित्यत आह ॥ **साधकत्वमिति**। प्रामाण्यादेः सिद्धिमिच्छता। ननु साक्षी सन्नपि निर्विशेष एव सन्निधानमात्राद्वस्तु प्रकाशयति। अतो वः सविशेषप्रमाणे नास्माकं सम्प्रतिपत्तिरित्यत आह॥ **अविशेषस्येति**। तन्न वादिता तेषां तस्मान्न वादिता। सम्प्रतिपन्नप्रमाणाभावात्। तस्माद्वादित्वान्यथाऽनुपपत्तिस्तर्कोद्वचनव्यवहृतिः सत्या। एतस्माद्व्यवहृतेः सत्यत्वाच्च व्यवहारविषयो विश्वं सत्यमित्येवागतम्। न ह्यर्थक्रियाकारिणो मिथ्यात्वं दृष्टं क्वापि। ननु सम्मतमावयोर्व्यावहारिकसत्यस्य प्रमाणस्य साधकत्वम्। प्रातिभासिकस्यैव हि शुक्तिरजतादिवदर्थक्रियाकारित्वं न दृष्टम्। न च तावता परमार्थसत्यत्वं देशकालादिभिः सह बाधोपपत्तेरित्यत्रोच्यते ॥ **व्यवहारसत इति**। पूर्ववदसम्प्रतिपन्नम्। उक्तप्रकारेण प्रमाणविकलत्वात्। अथासतः ख्यात्ययोगात्सतो बाधायोगात्ख्यातिबाधान्यथाऽनुपपत्त्या सदसद्भ्यामनिर्वचनीयं हि शुक्तिरजतादिवदेव ज्ञानबाध्यत्वाद्बन्धो वाक्यं च तथा स्यादित्यत्रोच्यते॥ **वैलक्षण्यमिति**। एतेन प्रमाणविकल्पन्यायेन। वैलक्षण्यं सत इत्यादेरयमर्थः। सतो वैलक्षण्यमसत इत्यसतो वैलक्षण्यं सत इति

भावाभावात्मकस्य विश्वस्य स्वयं रूपं सन्न च वस्त्वन्तरम् । अतो भेदवादिनः कुतोऽनिष्टम् । सतो ब्रह्मणोऽसतः शशविषाणादेरिति वा । यदि सद्वैलक्षण्यं नाम सर्वस्मात्सतो वैलक्षण्यमित्युच्यते । तर्हि सतां भेदसंस्थितिः । अथ नायमेकविशेषो विवक्ष्यते । यस्मात्कस्माच्चित्सतो विलक्षणमित्यत आह ॥ **सन्मात्रत्वमिति** । यच्चोक्तं शुक्तिरजतवज्ज्ञानबाध्यत्वं सदसद्वैलक्षण्यस्य हेतुत्वेन तदसिद्धम् । जगतो विनाशातिरिक्तस्य बाध्यत्वस्यास्माभिरनङ्गीकृतत्वात् । तर्हि शुक्तिरजते किं बाध्यत्वमित्यत आह ॥ **विज्ञातस्येति** । नासतोऽसत्त्वेन ख्यातिर्निषिध्यते । किन्तु सत्त्वेनेत्यत आह ॥ **अन्यथात्वमिति** । अन्यथात्वं शुक्ते रजतत्वमसत् । तस्माद्भ्रान्तावेव प्रतीयते न त्वभ्रान्तौ । एवं चासत एव रजतसत्यत्वस्य प्रतीतता । बन्धमिथ्यात्ववादिनामधिकारादिकं न सम्भवतीत्याह ॥ **निर्विशेष इति** । स्वयंप्रकाशानात्मस्वरूपमज्ञानावृतं । नापि तदैक्यविशेषः। निर्विशेषत्वात् । आत्मनि निर्विशेषे स्वयंप्रकाशे सति तस्याज्ञानावृतं किं वस्तु भवेत् । तस्मिन्वा किमज्ञानावृतं भवेत् । न हि स्वयंप्रकाशस्य तस्मिंश्चाज्ञानं सम्भवति । स्वयंप्रकाशत्वादेव । नाप्यात्मैकदेशे तस्य निर्विशेषत्वादेव । नापि मिथ्याविशेषे । मिथ्याविशेषोऽज्ञानापेक्षोऽज्ञानं मिथ्याविशेषापेक्षमित्यन्योन्याश्रयत्वात् । सत्यात्मव्यतिरिक्ते वस्तुन्यावरकमज्ञानं तेनापि नेष्यते । दृश्यत्वभङ्गप्रसङ्गात् । नापि जडाश्रितत्वेनासत्यस्यास्मदादिवदप्रकाशस्वरूपत्वादेवानङ्गीकाराच्चाज्ञानस्याभावाच्छास्त्रवैय्यर्थ्यम् । अज्ञस्याज्ञानाङ्गीकारात्तन्निवृत्त्यर्थं शास्त्रमित्यत आह ॥ **अज्ञानस्य चेति** । अज्ञानान्तरादिति कल्पने तस्यापि मिथ्यात्वमज्ञानान्तरादित्यनवस्था । तज्ज्ञानान्मिथ्यात्वमस्य तस्मादिति चेत् । अन्योन्याश्रयात् । अथवाऽज्ञानस्य स्वस्य स्वस्मादेव मिथ्यात्वादेवात्माश्रयता । स्वभावाज्ञानवादस्याज्ञानकल्पितत्वं विना स्वयमेव भगवदज्ञानमिति वादस्याविद्याया दुर्घटत्वाद्दूषणत्वाङ्गीकारान्नोक्तदोष इत्यत आह ॥ **स्यादिति** । एवं चाश्रयविषयानपेक्षत्वादविद्याया आत्माऽप्यविद्यावद्दुर्घटः स्यात् । निवर्तते च । अतोऽज्ञानाभावादज्ञान्यधिकार्यज्ञातो विषयोऽज्ञाननिवृत्तिः फलं च नास्ति मायिमते । आदिशब्दाद्गुरुशास्त्रादिकं च । ननु तत्त्वमस्यहं

ब्रह्मास्मीत्यादिवाक्यैर्जीवब्रह्माभेदावसितेर्नं दुःखादेर्बन्धस्य सत्यत्वमित्यत आह ॥ **सत्यत्वादिति** । उक्तन्यायेनाहं दुःखीत्यादिप्रत्यक्षेण प्रत्यक्षोपजीव्यप्रमाणविरोधे वा कस्याप्यर्थान्तरं परिकल्पनीयम् । नोऽप्यजीव्यस्य दौर्बल्यमित्याह ॥ **यजमानेति** । यजमानो वै पयः । यजमानः प्रस्तर इति श्रुतेः । तन्मानता तस्मिन्नर्थे प्रमाणता । ऐक्यवाक्यस्य गतिमाह ॥ **स्वातन्त्र्ये चेति** । स्वातन्त्र्ये वशीकृतग्रामजनानां पुरुषाव्हाने ग्राम आहूत इति । विशिष्टत्वे जनपदेषु विद्याविशिष्टानां ब्राह्मणानां समागमे सर्वे जनपदाः सङ्गता इति । स्थानैक्ये एकीभूता सेनारणाजिर इति । मत्यैक्ये पूर्वं परस्परविरुद्धानां ग्रामजनानां सम्मतौ तत्रैकीभूतो ग्राम इति । सादृश्ये सिंहो देवदत्त इति । चित्रमुद्दिश्यायमर्जुन इति वा । अत्राहुः । कार्यकारणलक्षणे विध्यर्थ एव । मन्त्रार्थवादात्मकानां सर्ववेदानां तात्पर्यानिष्टसाधने सिद्धरूप इति । अत्रोच्यते ॥ **कार्यतेति** । इष्टसाधकं कार्यमिति कार्यलक्षणमित्युच्यते चेत्तादृशं कार्यं सम्भवति नेतरत् । तस्य लक्षणासंभवात् । क्रियाव्याप्यं कृतियोग्यम् । तदिष्टमित्यादेरयमर्थः । तस्मादिष्टं कार्यं तथा तत्साधनं च तदुभयमपि सिद्धमेव । तदेतत्प्रेयः पुत्रात्प्रेयो मित्रात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति श्रुतिः । प्रियो हि ज्ञानिनोऽत्यर्थमहमिति भगवद्वचनमादिशब्दोक्तम् । ननु व्युत्पत्तिवशाद्वाक्यार्थबोधो व्युत्पत्तिश्च वृद्धव्यवहारात्कार्य एव सम्भवति । गामानय गां बधानेत्यादिषु व्युत्पत्तिदर्शनात्कथं सिद्धार्थबोधकत्वं वाक्यस्येत्यत आह ॥ **आकाङ्क्षेति** । तस्मिन्नेवेष्ट एव । तव भ्राताऽपूपमत्ति क्षीरं पिबतीत्यादौ क्षीराद्यर्थावापे तत्तच्छब्दावापादपूपाद्यर्थोद्वापे तच्छब्दोद्वापाच्च । सिद्ध एव बालो व्युत्पत्तिमप्येति । वर्तमानत्वाद्देशकालसान्निधेराकाङ्क्षावस्तुन्यभिरुचियोग्यता । अङ्गुलिप्रसरणादिविषयताव्युत्पन्न इत्यादेरयमर्थः । एवं वर्तमानविषयेऽत्ति पिबतीत्यादिक्रियाशब्दो व्युत्पन्नः । एष्यति पास्यतीति भाविष्यद्विषये क्रियाशब्दे शब्दश्रुत्तदनन्तरमेव पुनरनादिदृष्टया पश्चाद्व्युत्पत्तिमेष्यति । वर्तमानादिकं क्रमादाकाङ्क्षायुक्तं तदिति यस्मात्तस्मात्कालत्रयावच्छिन्ने विधेर्व्युत्पादनं कुतः । तादृशवस्तुन एवाभावात् । ननु क्वापि

प्रथमतो भविष्यत्याकाङ्क्षोदयस्तत्र तत्र व्युत्पत्तिः किं न स्यादित्यत आह ॥ **दृष्टश्चेति** । वर्तमानकाले दृष्टश्चेत्यादिपदार्थं विज्ञातवतस्तदनन्तरातीतकालेऽपि तव भ्राता पूर्वमपूपमघसदित्यादिपदार्थं च ज्ञातवतः पुनरपि कदा नु तदत्स्यामीत्याकाङ्क्षा भविष्यदर्थेऽपि स्यात् । पुनस्तद्वलादत्स्यत्येत्यादिपदार्थं च गृह्णाति । इष्टं सुखादिकम् । प्रवृत्तिः परेषां गवानयनादिरूपामिष्टसाधनप्रवृत्तिं न निषेधते । तदाह ॥ **क्वापीति** । तदर्था ज्ञानार्था इति । पुत्रस्ते जात इत्यादिवाक्यात्परोक्षं ज्ञानमितश्च श्रुतेर्न कार्यपरत्वं सम्भवतीत्याह ॥ **न चेति** । तस्मादित्यादेरयमर्थः । तस्माद्यागादिकार्यार्थं स्रुगादिवाचकवाक्यस्य स्वार्थे तात्पर्याङ्गीकारादुपासनार्थमपि सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्य इत्यादिवाक्यं ब्रह्मस्वरूपोपासनादिवाचकं स्वार्थेऽसावित्यादितात्पर्यवद्भवेत् । नन्वस्मिन्वाक्ये इतिशब्दोऽन्वयः कार्ये मनो ब्रह्मेत्युपास्त इत्यादिवत् । एवं सति तदीशित्वादिकं विवत एवेति नियमो न स्यात् । मनसो ब्रह्मत्ववदविद्यमानस्यापि ध्यातुं शक्यत्वादित्यत आह ॥ **इतिशब्देति** । गार्हपत्ये जुहुयात् । यज्ञे यत्किञ्चित्स्मरणमात्रं भवेत् । वत्सतरीमार्जन्ति **सोमक्रयणीं** तया सोमं राजानं क्रीणन्तीत्यादिकर्मशेषमिति वाक्यान्तराणामितिशब्दाद्यवेद्यत्वादध्याहारो न सम्भवतीत्यत आह ॥ **इतिशब्देति** । आदिशब्दादुपास्य एकः परतः परो य इत्यादि । आत्मानमेवेत्यादिष्व्यात्मेत्येवेत्यादिना समानप्रकरणत्वात्तद्वतेरितिशब्दस्य प्रयोगेऽपि विधित्सितेऽग्निवाक्येऽपि तद्विधानं समं स्यात् । ननु नात्र साम्यमग्निष्टोमादिवाक्येष्वितिशब्दाश्रवणात् । उपास्तिवाक्येष्वेकत्र श्रुतस्येतिशब्दस्यान्यत्राप्यध्याहारः स्यादेव । तथा सत्येकवाक्यत्वोपपत्तेरित्यत आह ॥ **एकेति** । कर्मपरस्य चोपास्तिपरस्य च वेदस्य साम्येन वाक्यभेदो न युक्तः स्यादेवं चोपास्तिवाक्यात्कर्मवाक्ये चेतिशब्दाध्याहारो युक्तः स्यात् । कर्मणां परमात्मज्ञानसाधनत्वाज्ज्ञानस्य च मोक्षमहाफलहेतुत्वात्सर्ववेदस्यापि तत्र तात्पर्यायोगः स्यात् । तत्रैव श्रूयते चेतिशब्द इत्यत आह ॥ **इति ब्रूयादिति** । वाघि सुब्रह्मण्य इति ब्रूयादिति वाक्यमणिप्रकरणे समीपस्थमवगतं च । तस्मादितिशब्देऽसति चोपासनायां ब्रह्मणि तद्गुणादिषु तात्पर्यं समस्ति ।

पृथक् तात्पर्यकल्पने कारकेषु क्रियायां च तात्पर्यमस्तीति कल्पने पदार्थानां प्रमाणावगतत्वं चेत्तस्मादात्मादिपदानां स्वार्थे स्वामित्वादौ तत्र तद्गुणविशिष्टो पास्त्यादौ वाक्यार्थे चेत्युभयत्र तात्पर्यं भवति। ननु मन्त्रात्मकपदात्मकवाक्यानां विधिवाक्येनैव ह्येकवाक्यता सम्भवति । तस्मात्तेषां स्वार्थैकतात्पर्यकल्पनायां वाक्यभेदः स्यादित्यत आह ॥ **पृथगिति** । तैरप्यरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यत्रारुणया क्रीणाति पिङ्गाक्ष्या क्रीणातीत्यादिकारकपदानां क्रियापदेनान्वयोऽङ्गीक्रियते । पुनर्यैवारुणा सैव पिङ्गाक्षीत्यादिपार्ष्णिकान्वयोऽपि । न हि तेषामप्येतद्वाक्यभेदभयम् । तर्हि न क्वापि वाक्यभेदो नाम दोषो न स्यादित्यत आह ॥ **वाक्यभेद इति** । महावाक्यभेदाद्धि वाक्यभेदाख्यदूषणं न त्ववान्तरवाक्यबहुत्वेन । नन्वादित्यो यूप इत्यादौ पदानां स्वार्थे तात्पर्यकल्पनायां प्रत्यक्षादिविरोधः स्यादित्यत आह ॥ **प्रत्यक्षेति** । श्रुतिप्रामाण्ययोगत एवमेव श्रुतिप्रामाण्योपपत्तेः । अन्यथा श्रुतिप्रामाण्यानङ्गीकारे एतद्ग्राह्यप्रामाण्यग्राहकस्यापि तथात्वं तस्यापि तथात्वमित्यनवस्था । विप्रलम्भादेरित्यादिशब्देन काचकामलादयो दोषा विवक्षिताः । नित्यत्वस्यानङ्गीकारे कर्तुरविप्रलम्भस्तस्य सर्वज्ञत्वं वाक्यस्य तेन कृतत्वं तस्यार्थत्वमित्येवार्थाः कल्प्याः । नेदं कल्प्यतेऽनुमानेन ज्ञायत इत्याशङ्क्याह । तत्र प्रत्यनुमानमाह ॥ **न बुद्ध इति** । अतो विप्रतिपत्त्या संशयसम्पत्तौ सत्यां वाक्यमपि सदागमरूपं परार्थानुमानरूपं वा प्रत्यक्षवदेव प्रमाणमित्यापतितम् । तथा हि । गृहीते हि धर्मिणि तद्गुणादौ क्वचित्संशये सञ्जाते यथा बलवत्प्रत्यक्षं प्रमाणं भवति । एवमागमेऽपि गुणावन्वितार्थबोधकत्वनियमादत्राह । पदानि त्वेतानि स्वं स्वमर्थमुक्त्वा निवृत्तव्यापाराणि । अथेदानीमर्थाः परस्परान्वयं बोधयन्तीत्युच्यते ॥ **शक्तिश्चेति** । अन्यथा कल्पनागौरवं स्यात् । प्रकटितं चेदं श्रीमत्तत्त्वदीपिकायां गुरुभिः । स्वत एवान्योन्यमन्वितानामर्थानामनन्वितेन पश्चाद्वाच्यत्वं कल्पयित्वा तेषामेवान्योन्यमन्वितानां वाक्यार्थलक्षकत्वकल्पनाद्वरमन्वितानामेव पदार्थानां वाक्यार्थत्वाश्रयणमनुभवानुकूल्यादिति । न चाशक्याभिधायित्वम् । अशक्यस्य पदानां वाचकशक्तेरविषयस्य वाक्यार्थस्याभिधायकत्वं सम्भवति । इदं च प्रपञ्चितं सन्न्यायरत्नावल्यां

श्रीपद्मनाभतीर्थभट्टारकैः । न च पदार्थानां वाचकत्वशक्तिमन्तरेण वाक्यार्थबोधकत्वं सम्भवति । घटोऽस्तीति वाक्यस्य पटसद्भावबोधकत्वप्रसङ्गात् । चेतनस्य विरम्यव्यापारः सम्भवति । यदि पदानामेव स्वार्थबोधकद्वारलक्षणया वाक्यार्थबोधकत्वं कल्प्यते तर्हि तेषामेव द्विधाप्रवृत्तिकल्पनाप्रसङ्गात् । न ह्यचेतनस्य विरम्यव्यापारः सम्भवतीति । नन्वेवं सति तत्तत्समयिभिरन्यथा नियमितां प्रमाणन्यायपरिपाटीं निराकृत्य प्रमाणन्यायसच्छिक्षां किमिति भगवत्तमो न कृतवानित्यत आह ॥ **एतदिति** । मानन्यायैः प्रमाणलक्षणप्रकारैः प्रमेयशोधनं नाम । अतः स्वत एव प्रपञ्चितत्वात्तदर्थं ब्रह्मतर्कार्थं न प्रापञ्चयत् । अत इत्यसूचयन्नपरं सर्वमेतन्न्यायजातं विदुषामनुभवतः सिद्धमित्यतोऽप्यत इति हृदिस्थत्वेनासूचयत् । एतदप्रपञ्चने हेत्वन्तरमाह ॥ **देवैश्चेत्यादिना** । यद्यप्यतःशब्देन प्रतिपक्षयुक्तीनामपि निराकरणं सूचितम् । तथाऽपि शास्त्रमूलत्वान्न ताः पृथगनूद्य निराकर्तव्या इत्याशङ्क्याह ॥ **एता हीति** । प्रत्यक्षार्थानामीक्षायामप्यक्षमो मायी सर्वैः पर्यनुयोज्यत्वात्तमेव पक्षप्रत्यवस्थानायाभिवीक्षते । एवमतःशब्दार्थं पर्यवस्थाप्य ब्रह्मशब्दार्थं विवृणोति ॥ **स्वयमित्यादिना** । यद्यपि मीमांसाशास्त्राणां त्रयाणामपि परस्परभेदस्तथाऽपि कर्मदेवतामीमांसयोर्ब्रह्म-मीमांसाप्रतिपाद्यस्य ज्ञानस्य साधनप्रतिपादकत्वेन तदेकवाक्यत्वाच्च देवतामीमांसोदितस्यात्रोपजीव्यत्वं युक्तमेव । ब्रह्मशब्दस्य नारायणशब्द-पर्यायत्वमस्तीत्याह ॥ **दोषारेति** । तद्वै तद्ब्रह्माहुर्बृहन्तो ह्यस्मिन्गुणा इति हि श्रुतिर्ब्रह्मशब्देनापि गुणपूर्तिमेव वदति । उक्तं श्रुतिसिद्धत्वं प्रतिपादयति ॥ **अम्भस्यपारेत्यादिना** । नारायणपदोदितो विष्णुरेवाम्भस्यपार इति नारायणानुवाकादावुक्तः । नारायणत्वमेवाप्स्थत्वमित्यत्र व्यासस्मृतिं प्रमाणमाह । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति । निर्णयरूपिण्यामैतरेयश्रुतौ नारायण एव मम योनिरप्स्वन्त-स्समुद्र इति श्रियाऽऽत्मनो योनित्वेनाप्स्वन्तरीरितो योनिर्मम कारणम् । कीदृग्भूतया कामतो विधिरुद्रादिपददात्र्या यं कामय इत्यादेः । अस्येशाना जगतो विष्णुपत्नी । ईश्वरीं सर्वभूतानां । रेतस्त्वजायां कविरादधेऽजः । ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं त

इत्यादेः श्रियः एव विधादिपददातृत्वं नान्यस्य । श्रीस्वामित्वं च विष्णोरेव । समार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणीति विष्णुनाम्नैवोदितस्य तस्य तत्रोक्तं सर्वदेवाधारत्वम् । एषा तैत्तिरीयश्रुतिरुक्ता । तत्रोक्तं समुद्रमेव स्थानम् । यमन्तस्समुद्रे कवयो वयन्तीत्युक्त्वा ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुरित्यत्र यदुदिदतमक्षरमिति नाम तदेव च तदक्षरे परमे प्रजा इत्युक्त्वाऽहं सुवे पितरमस्य मूर्धन्मम योनिरिति तत्रोक्तं जगत्प्रसूत्याः कारणत्वं च । यतः प्रसूता जगतः प्रसूतीत्युक्त्वा च तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामिति तदेव ब्रह्माऽब्रवीत् ॥ १ ॥ **जन्माद्यस्य यत** इति सूत्रं विवृणोति॥ **अन्तारित्यादिना सूक्तेन** । एवमस्य चात्मीयादम्भ्रण्यादिसूक्तैर्नारायणानुवाकाद्युपनिषद्भिश्च । आदिशब्दाज्जन्माद्यस्य यतोन्वयादितरतश्चेत्यादिस्मृतिभिः समुद्रशायित्वादिलक्षणैर्विष्णुत्वेन परंब्रह्मत्वेन । एवं यद्ब्रह्म समुद्रशायित्वादिलक्षणैर्विष्णुत्वेन सूक्तोपनिषदादिभिरुक्तम् । तुशब्दाद्यच्च जगत्कारणत्वादिलक्षणं परंब्रह्मत्वेन चोक्तम् । तदेवात्र सूत्रे लक्षणे लक्षणतः प्रदर्श्यत इत्यर्थः । अस्य चात्मीयादीनि सूक्तानि नारायणानुवाकादय उपनिषद उक्ता हि सृष्ट्यादयः । आसु श्रुतिषु तच्च प्रपञ्चितं तत्त्वप्रदीपकायाम् । सा च ब्रह्मत्वविधात्री तैत्तिरीयश्रुतिर्यानि लक्षणान्याह तान्येवानेन सूत्रेणाह भगवान् । तथा हि । यतः प्रसूता जगतः प्रसूती । सव निमेषा जज्ञिरे विद्युतः पुरुषादधीति । प्रकृतिकालसृष्ट्यभिधानेन तस्मादवे सृष्टिरुक्ता । तदधानीत्वादितरसृष्टेः । यस्मिन्निदं सञ्च विचैधि । यास्मिन्देवा अधिविश्वे निषेदुरिति । स्थितवतेस्तत्पश्यन्विश्वा भुवनानि विद्वान् । यस्मिन्विश्वं भवत्येव लीनमिति ज्ञानं संहारश्च । विवेश भूतानि चराचराणीत्यर्थान्नियमनम् । येनादित्यस्तपति तेजसा भ्राजसा चेति रपष्टम् । ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत्प्रजास्वित्यज्ञानं बन्धश्च । य एनं विदुरमृतास्ते भवन्तीति मोक्षः । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्यन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्मेति तैत्तिरीयश्रुतिर्विष्णोरेवैतानि स्रष्टृत्वादीनि प्रसिद्धलक्षणान्याहेति । अत्रैव तदेवाग्निस्तद्वायुरित्यादिदेवतान्तरवचनात्तेषां ब्रह्मत्वं किं न स्यादित्यत आह ॥ **यं नामानीति** । नामानि सर्वाणि यमाविशन्तीत्येतां श्रुतिं यं नामानि विशन्त्यद्धेति

तदर्थवचनेन लक्ष्यते । इति श्रुतेर्नामानि सर्वाणि विष्णोरेवेति यतोऽतस्तस्य नामवाच्यत्वलिङ्गात् । अतो नामानि विश्वानि न सन्ति लोके इति श्रुतेश्च न मुख्यतोऽर्थः । अतस्तदन्यस्य सर्वनामवाच्यत्वे सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यादिना रोदनादिदोषवाचिनां शब्दानां च वाच्यत्वाद्दोषवत्त्वापात इत्यत आह ॥ **गुणा इति** । गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि । नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैवं दोषाश्रुताश्च नाशैर्हि तथा प्रतीता इत्यस्माद्वचनाद्भगवद्विषये श्रुतेर्दोषोऽर्थो न भवेत् । किन्तु तद्दोषस्वातन्त्र्याख्यगुण एव श्रुतेस्तात्पर्यं नैव दूषणे प्रीतिनाशकत्वात्तस्य । अत्र हि भगवत्प्रीत्या दोषवचने तद्विरोधे प्रीतिनिरोधेन वेदवाक्यस्य मानत्वान्निष्फलत्वापातात्लैङ्ग्यादीनि पुराणानि पाशुपतादीनि शास्त्राणि च विष्णोः क्वचित्पारतन्त्र्यादिदोषान्वदन्तीत्यत आह ॥ **न पुराणादीति** । पुराणादीनां श्रुतिविरुद्धेऽर्थे मानत्वं न भवेत् । तं न विषयीकुर्वन्तीत्यर्थः । पूर्वपक्षप्रकटनार्थं पाशुपतादिशास्त्रान्तरमूलत्वादेव तथा प्रतीतेः शैवान्पाशुपतांश्चक्र इत्यादेः । आदिशब्दपरिगृहीतानां पाशुपतादीनां तु श्रुतेर्विरुद्धार्थे वर्तमानानां प्रामाण्यमेव नास्ति । हरेराज्ञया मोहार्थं कृतत्वात् । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारयेत्यादेः । अन्येषामपि क्वापि सर्वनामवत्त्ववचनासम्भवात् । अस्य पारतन्त्र्यादिदोषवचनसम्भवाच्च । तेषां जगत्स्रष्टृत्वादिकं किं न स्यादित्यत आह ॥ **न सर्वेति** । अस्ति च तेषां दोषवचनमित्याह ॥ **अज्ञानामिति** । इदं पाशुपतदूषणे स्वयमेवोदाहरिष्यति । उक्तार्थनिगमनमुखेन ब्रह्मणो जगज्जन्मादिकारणत्वे एकं परञ्ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तविक्रियम् । ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृतिमिति स्वयं सूत्रकारो भगवानेव भागवतेऽब्रवीत् । एकं प्रधानं परं विलक्षणम् । अनन्यमन्तर्भेदरहितम् । अद्वयं समाधिकरहितम् । स्वसंस्थया स्वरूपस्थित्या । अस्य जगत उद्भवादिहेतुभिः स्वलक्षणैः स्वरूपभूतधर्मैर्लक्षितं भावनिर्वृतिरूपमात्मानं दध्यौ । भावो ज्ञानं निर्वृतिरानन्द इत्यर्थः । ननु तत्त्वमस्यादिवाक्यैर्ब्रह्मणो जीवैक्यमङ्गीकर्तव्यम् । तच्च जन्मादिकारणत्वलक्षणस्य हेयत्व एव

सम्भवति । तस्मादेतत्तटस्थलक्षणमेवेत्यत आह ॥ **अत इति** । स्वरूपलक्षणत्वकथनादेव वाक्यस्य विषयान्तरं स्वयमेव वक्ष्यति । **हिताक्रियादिदोषमितरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति** जिज्ञास्य ब्रह्मणो निर्गुणत्वमनेन सूत्रेण प्रभुणैव निषिद्धम् । तत्त्वमस्यादिवाक्यैर्ब्रह्मणो जीवैक्यं प्रतिपाद्यते । तच्च तयोः परस्परविरुद्धधर्मिकत्वान्मुख्यार्थाङ्गीकारे न सम्भवति । तस्माद्ब्रह्मगुणानां जगत्कारणत्वादीनामेव जीवगुणानां दुःखत्वादीनां च मञ्चाः क्रोशन्तीत्यादिवज्जहल्लक्षणया ब्रह्मणि वृत्तेर्मुख्यतो निर्गुणं तदित्यत आह ॥ **अतोजीवैक्यमिति** । **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति** वक्ष्यति । भवेदेतज्जीवब्रह्मणोर्भेदाङ्गीकारेणैव यथाश्रुतगुणवत्त्वेन मुख्यार्थस्य सम्भवे कुतो लक्षणावकाशः । एवंविधा लक्षणा स्वयमपि कुतः सम्भवेत् । जहदजहद्रूपेणानुपलब्धत्वात् । ननूपलभ्यते सोऽयं देवदत्त इत्यादौ । तत्र तत्पदार्थोत्तद्देशकालविशिष्टत्वमेतत्पदार्थोदेतद्देशकालविशिष्टत्वमिति चापहाय देवदत्तस्य स्वरूपमात्रैक्यं लक्ष्यते । न ह्येकस्मिन्नेवार्थे यौगपद्येन तदुभयं सम्भवति । परस्परविरोधादिति । मैवम् । उक्तरीत्या जिज्ञास्यब्रह्मणः सदैव गुणवत्त्वे प्राप्ते पराभिमतं निर्गुणं सदसद्भिन्नस्य तस्य खपुष्पवदनुपलम्भान्मिथ्यागुणाः स्युर्नेत्यत आह ॥ **न चेति** । अथवा यदि निर्गुणत्वमिष्यते तर्हि पारिशेष्यादासुरत्वं स्यात् । असुराणामपि शोभनगुणहीनत्वेन निर्गुणत्वात् । लक्ष्यलक्षणयोर्भेदे तयोः सम्बन्धापेक्षत्वात् । तत्सम्बन्धस्य च सम्बन्धान्तरापेक्षयाऽनवस्थानात् । अभेदे च लक्ष्यमात्रस्य चाविशेषादभिमतभङ्गः । भेदाभेदपक्षे स्वव्याहतिदोषद्वयापातश्च । इत्थं दूषणविवक्षया मायिनेति पृष्टेऽस्माभिरस्यैव दूषणत्वविवक्षयैक्यवतोर्भेदो वेत्यादि पृष्टे सति तदैक्यस्य गतिरेव न विद्यते । न त्वस्मन्मते लक्ष्यलक्षणयोर्व्याहतिः । अत्राभेदे विशेषाङ्गीकारेणाविरोधात् दूषणान्तरं चाह ॥ **ऐक्याभेदेनेति** । ऐक्यवता चैतन्येनैक्यस्याभेदे तदैक्यं स्वयंप्रकाशत्वाच्छास्त्रेण न ज्ञेयम् । भेदे त्वैक्यस्य मिथ्यात्वमेष्टव्यम् । अन्यथाऽद्वैतहानेः । तथा सति च बलादपि भेदस्य सत्यत्वं स्यात् । परस्परविरुद्धयोरेकतरनिषेधस्यान्यतरविध्यवधिकत्वात् । ऐक्यवतोर्भेदाभेदौ यद्यङ्गी-

क्रियेते तर्हि दोषद्वयादिति सिद्धत्वात्। दूषणान्तरमप्याह। तयोरपि भेदापेक्षत्वात्तयोरपि तथात्वं स्यादित्यनवस्थितिः। ऐक्यस्य स्वनिर्वाहकता चेत्स्यात्स्वनिर्वाहकशब्दस्य स्वेन स्वयं वाह्यं स्वस्य स्वयं वाहकमित्यर्थः। तत्र वाह्यं वाहकमित्युभयरूपः शब्दो निर्विशेषैकार्थवृत्तित्वात्पर्यायः स्यात्। नो चेदभेदवान्वा स्यात्। पर्यायपक्षे वाह्यवाहकयोरैक्यस्योक्तत्वात्। अन्यतरापेक्षया भेदापातात्। सम्बन्धापेक्षया भेदवत्पक्षे च सम्बन्धापेक्षयाऽनवस्था। सत्येत्यादेरयमर्थः। सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्याभिप्रेतया व्यावृत्त्या प्रयोजनं नास्ति। एवमुक्तन्यायेन व्यावृत्तस्य वस्तुनोऽविशेषत्वे। तथा चाभ्युपगतमयं निर्विशेषं खण्डितं दूषितम्। तथा हि। सत्यज्ञानादिपदैर्ब्रह्मणोऽध्यस्तात्तद्रूपानृतत्वादेर्व्यावृत्तिर्विवक्ष्यते। तत्र ब्रह्मपदेनाब्रह्मताव्यावृत्त्या यदेव च रूपं प्रतीतं सत्यादिपदैरनृतादिता व्यावृत्तावपि तदेवाप्रतीतम्। अतो विशिष्टं चाविशिष्टं चेदपसिद्धान्तः। तदेव चेद्ब्रह्मपदेनैव सिद्धत्वात्पदान्तरवैयर्थ्येन वाक्यस्यैवाभावः। अत एव वाक्यार्थो न स्यात्। एतेन वाक्यार्थस्य विशिष्टत्वनियमेन ब्रह्म निर्विशेषं मूकोऽहमितिवद्भवेत्। व्याहतेर्निर्विशेषत्वापातात्। अन्यथाऽनुपपत्तिबलाद्विशेषविशेषिणोर्भेदे सम्बन्धापेक्षयाऽनवस्था। अभेदे विशेषिमात्रमिति निर्विशेषविशेषिणौ। भेदाभेदे स्वव्याहतिः। अतो गत्यन्तराभावान्न परमार्थः सम्भवति। इष्येते चेन्माययाऽवकाशः। तस्य प्राङ्निरस्तत्वाच्च। विशेषलक्षणमाह॥ **भेदेति**। एवं धर्मान्पृथक् पश्यंस्तानेवानुविधावति। पृथग्दृष्टांस्तानन्वेव विपरीतं धावति। तद्दर्शनानन्तरमेव विपरीतां गतिं गच्छतीत्यर्थः। तदभेदो गुणिनो विष्णोर्गुणाभेदः॥ २॥ रुद्रादेरपि जगज्जन्मादिकारणत्वमाशङ्क्य तत्परिहारायाह॥ **शैवादीति**। अयमर्थः। क्वापि दृष्टविषयं फलं शैवाद्यागमतः सम्प्राप्तमित्यागमोदितानुमानोपलब्धमित्यतस्तद्वाक्योपमया तत्फलज्ञातवाक्योपमया। तथा चायं प्रयोगः। शैवाद्यागमः प्रमाणमीशवाक्यत्वात्सम्प्रतिपन्नवाक्यवदिति चेन्न। तस्मिन्नागम एव गतेन क्वचिद्दृष्टफले व्यभिचारिवाक्यान्तरेण दृष्टान्तीभूतेन। विमत आगमः प्रामाण्यनियतो न भवति। ईशवाक्यत्वादिति। ननु विमतं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन जगत्कर्तेश्वरः

सिध्यति । पक्षधर्मताबलेन तस्य सर्वज्ञत्वं सिध्यतीत्यत आह ॥ **न पृथगिति ।** न बुद्ध इत्यादिपूर्वोक्तेन । एतेन प्रमाणान्तरभावेन । नावदे विन्मनुते । नैषा तर्केण मतिरापनेया । नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्तीति । न च कार्यत्वहेतोः पक्षधर्मताबलात्सार्वज्ञसिद्धिरित्यत आह ॥ **नेति ।** आदिशब्दाद्वृक्षकर्तृत्वं लौकिककर्तृचेष्टोत्पत्तिकवनादीतरकर्ताऽत्र विवक्षितः । सूचितमनुमानं प्रयुङ्क्ते ॥ **वृक्षकृदिति ।** न हि चैत्रोऽपि स्वावरोपितं सविटपशिफादलत्वेनाखिलं वेत्ति । ईदृशागमनिरपेक्षया गोवत्सरसवत्पञ्चमरसवादित्यतिप्रसङ्गानुमाने दृष्टान्ताः । तत ईशानुमानाभासत्वम् ॥ ३ ॥ **तत्तु समन्वयादित्यस्यार्थमाह ॥ न एवेत्यादिना** ॥ ४ ॥ यतो वाचो निवर्तन्त इत्यादिना ब्रह्मणः शब्दागोचरत्वादित्यादियोगादन्ययोगव्यवच्छेदेनोदितं शास्त्रगम्यत्वं नोपपद्यते । अवाच्यत्वादेव शब्दप्रवृत्तिहेतवः स्रष्टृत्वादयो गुणाश्च न सम्भवेयुरतो निर्विशेषस्य तस्य कथं जिज्ञासा सञ्जाघटीति । न चैवम् । तत्र व्यवहारलोपो लक्षणया वृत्त्या तत्र वेदान्तवृत्तेरित्यत्र प्रतिविधीयते ॥ **ईक्षणीयत्वत इति ।** स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत इत्यादिश्रुतावीक्षणीयत्वमुच्यते । ईक्षणीयत्वं वेदैकगम्यस्यावचनेनेक्षणीयत्वम् । श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिं परमस्य विन्देदिति श्रुतेः श्रुत्युपदिष्टस्य श्रवणादिनैव दर्शनोक्तेः । अन्यथावाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टं हीति पुरुषादिशब्दवाच्या एव ह्यर्था मञ्चादिशब्दैर्लक्ष्या दृश्यन्ते । किं तल्लक्ष्यमित्यनवस्थितिः । मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्देन मञ्चसम्बद्धानां सर्वेषामपि ग्रहणप्रसक्तेः पुरुषशब्देन तद्विशिष्यते । तस्यापि लक्ष्यत्वे मञ्चादिशब्दवदेव पुरुषसम्बन्द्धानां ग्राहकत्वात् । तत्रापि पदविशेषे विवक्षा स्यात् । तत्राप्येवं तत्राप्येवमित्यनवस्था । यथा प्रसिद्धमाधुर्यादिशब्दसादृश्येनाप्रसिद्धमाधुर्यादिकमवचनेनैव लक्ष्यते । एवमवाच्यस्यापि लक्षणा सम्भवतीत्यत आह ॥ **माधुर्येति ।** चशब्देन माधुर्यादिविशेष इत्यादिशब्दैर्वा । विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्हारीत्यभिधीयत इत्यादि सूदशास्त्रे । ननु सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रानृतत्वादिव्यावृत्तं ब्रह्म हि वाक्यार्थः । न चैकैकपदेन वक्तुं शक्यते ।

तस्मात्तद्वाक्येन लक्ष्यत इत्यत आह ॥ **वाक्यार्थ इति** । वाक्यार्थशब्देनोदित एव भवेन्न तु लक्ष्य इति प्रागेवोक्तम् । यतो वाच इत्यादिपदैर्न मूकोऽहमितिवत्स्वव्याहतम् । गौणार्थे यत्र वेदे । यो मायी । शाब्दत्वं शब्दानां मुख्यार्थवचनेन समन्वयप्रतिपादकत्वम् । नन्वीक्षणीयत्वेन वाच्यत्वं मायाशबलस्य ब्रह्मणो न शुद्धस्येत्याशङ्कापरिहारत्वेन गौण इत्यादेरर्थं विवृणोति ॥ **आत्मेति** । पूर्णगुणं सत्त्वादिगुणहीनम् । यदा यतो तदा ततः । यदातदेति हेत्वर्थे कालार्थे च प्रकीर्तिताविति वचनात् । आत्मन्येवात्मानं पश्येत् । स एतमेव पुरुषं ब्रह्म ततमपश्यत् । परात्परं पुरिशयं पुरुषमीक्षत इत्यादिश्रुतिषु तस्मिन्नीक्षणीय एव परब्रह्मणि प्रादेशशब्दोदितं ब्रह्म कारणं जन्मादिकारणत्वेन लक्ष्यं चेति । यतोऽतः शुद्धस्य मुख्येक्षणीयस्य वाच्यस्यैव ब्रह्मणो निर्वाच्यमायाशबलं विना स्वेच्छयैव जगत्कारणत्वाद्युपपत्तेर्वन्ध्यापुत्रोपममनिर्वाच्यं मायाशबलं ब्रह्म वाच्यमिति मानं विनैव कल्पयति । पुनरपि मानं विनैव वन्ध्यापुत्रोपमं पदैर्लक्ष्यमपि शुद्धमिति वदति । एवं वदन्नेव तरति शोकमात्मवित् । यस्यानुवित्तः प्रतिबुद्ध आत्मेत्यादिश्रुतिषु स्वनिष्ठानां मोक्षप्रदत्वेनात्मशब्दोदितस्य ज्ञानं मुक्तिसाधनमाह । सर्ववेदवाक्येषु स्वयमेव तावच्छब्दवाच्यत्वेन श्रुतस्य मायाशबलत्वेन श्रुतस्य त्यागः । विचार्यमाणे कस्यामपि श्रुतावश्रुतस्य निर्विशेषस्य कल्पनं साध्यमानस्य मायिनो यदि श्रुतपरित्यागाश्रुतकल्पनादिदोषदुर्घटमपि मतं भूषणमङ्गीक्रियते । तर्हि सर्वैर्भूषणैरलङ्कृतः स्यात् । न तु केनापि सुघटेन । तथा चासतः ख्यातिश्चेतनत्वं सतो बाधो जडत्वं मुक्तावुपपद्यते चेद्दुर्घटं सर्वमपि स्यात् । वसनहीनस्यालङ्कारस्यासमञ्जसत्वादन्तरीयमुत्तरीयमिति वसनद्वयं च स्यात् । तत्र प्रमाणमाह ॥ **अनन्देत्यादिना** । आनन्दाद्रहिता अनन्दा अविद्वांसोऽज्ञानिनः । अबुधोऽन्यथाज्ञानिनः । असुर्याऽसुरप्राप्याः । आत्महनः परमात्महनः । तद्गुणनिरासिन इत्यर्थः । अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रता इत्यादिशब्दार्थः । तमेवैकं जानथ । आत्मानमन्या वाचो विमञ्चथं। अमृतस्यैष सेतुरित्यहेयत्वेनोक्त आत्मा कथं गौणः । औपचारिकस्त्रिगुणसम्बन्धी वा । चतर्मुखादीति यावत् । एव चेद्ब्रह्मादीनां हेयत्वात्तारतम्येन

भक्तिविधानवैयर्थ्यमित्यत आह ॥ **परिवारतयेति** । ब्रह्माद्याः प्रधानत्वेन हेया अपि परिवारत्वेन ग्राह्याः । आत्मशब्दपर्यायेण पूर्णत्वेन वाच्यमानस्यान्यत्र लयप्रतीतेर्मुख्यस्य मायासम्भवाच्च । गौणेऽप्यात्मशब्दः स्यान्नामेत्यत आह ॥ **पूर्णस्येति** । पूर्णस्यावताररूपस्य स्वस्यैव पूर्णे मूलरूपे स्वस्मिन्नेवाप्यय उदाहृतः । नान्यस्मिन् । साक्षी चेता केवलो निर्गुणश्चेति सर्वभूतकारणे आत्मनि श्रुतनिर्गुण इति पदं कथं गौणं वदिष्यति । य इदं वदन्ति तद्गौणमेव । अन्यस्यागोचरत्वात् । अतो निर्गुणपदेन गुणाभावोपलक्ष्यमेव मुख्यमित्याशङ्क्य परिहरति ॥ **गुणेत्यादिना** । तदुपलक्ष्यं च पदं वाचकमासीत् । न तु लक्षकम् । तथा सत्यपसिद्धान्तः । तदपि लक्षकं चेत्तदपि तथैवेत्यनवस्था । एवं श्रुतहान्यादिसर्वदोषश्च । तदैक्षतेति श्रुतेर्न प्रधानमत्रोच्यते । अशब्दं हि तदिति साङ्ख्यनिराकृतिः । असौ साङ्ख्यो मायी च सम्भवति । समन्वयवचनेन कथान्तरावकाश इत्यत आह ॥ **समन्वय इति** । तदभावे शब्दगोचराभावे । अन्यस्य तु न कदाचित्समन्वयप्रतिपादनाधिकार इत्याह ॥ **कथमिति** । समन्वयो मुख्यवृत्तिस्तस्यैव । न तु लाक्षणिके औपचारिके स्यात् । किं मुख्यब्रह्मणो निर्गुणत्वाभावात् । तत्र लक्षणयैव शब्दवृत्तिः सम्भवतीत्यत आह ॥ **आत्मेति** । तदेव द्वितीयसूत्रेण जन्मादिकारणत्वेनोक्ते साक्षाद्ब्रह्मण्ययोगान्ययोगव्यवच्छेदेन समन्वयमाहोत्तरसूत्राभ्याम् । तदेव प्रथमसूत्रे जिज्ञास्यमुक्तम् । अपरथोत्तरसूत्रे यत इति परामर्शायोगात् । अत्र सूत्रे मुख्यार्थस्य वाच्यार्थस्य निराकृतौ निमित्तभूतोऽसम्भवश्चेत्कथम् । नन्वशब्दमस्पर्शम् । अदृश्येऽनात्म्ये । केवलो निर्गुणश्चेत्यादीनामप्रामाण्यासम्भवस्तन्निमित्तमित्यत आह ॥ **मानेति** । अवाच्यत्वादिलक्षणान्तरं मानैर्न गम्यते । अवाच्यत्वादिलक्षणत्वादेरित्यर्थः । एवममेयं चेच्छास्त्रस्य तत्र लक्षणया प्रवृत्तिर्न सम्भवति । लक्षणया बुद्ध्यवतारे मेयत्वप्रसङ्गात् । अस्मद्विवक्षितं ब्रह्मैव शास्त्रार्थ इति निगमयति ॥ **तस्मादिति** । यदि तदगोचरं स्यादित्युच्यते तर्हि तथाऽस्तु । तद्ब्रह्म वाङ्मनसागोचरत्वादशेषविशेषतोऽपि विनिर्गतमित्यपि मा वदेन्मायावादी । न चास्मच्छास्त्रगं तु तत्तादृशं ब्रह्म वेदान्तगं नैव स्वीक्रियते । अस्य ब्रह्मणो विज्ञेयत्वाद्यभावादेव शास्त्रकृत्याभावान्न वेदान्तशास्त्रं तदीयम् । किन्त्वनन्त-

गुणब्रह्मप्रतिपादकत्वादस्मदीयमेवासीत् । तस्यास्मच्छास्त्रस्य त्यजनं चैयं नामावाच्यत्वप्रतिपादनाद्वेदान्तवाक्यमिति स्वोक्तिदूषकः । अवाच्यं ते ब्रह्म वेदवाच्यमिति मा ब्रुयाः । असकृद्वचनं तात्पर्यार्थम् । श्रुतियुक्तिभ्यां च निरुत्तरकरणेन स्तम्भनं च बन्धनं नाम । अवाच्यत्वादिवाचकानां श्रुतीनां गतिमाह ॥ **अद्भुतत्वादिति** ॥ ५ ॥ **आनन्दमयोऽभ्यासादि**त्योदरध्यायस्य पूर्वत्र प्रपञ्च्यप्रपञ्चकभावात्मिकां सङ्गतिं दर्शयति ॥ **एवमित्यादिना** । एवमुक्तप्रकारेण ब्रह्मणः सामान्यतः शास्त्रावगम्यत्वे प्रतिपादिते सति । तत्रेत्यादिना पादसङ्गतिं दर्शयति । अत्राध्याये । शब्दानां नाम्नाम् । गुणीत्यादिनाऽधिकरणसङ्गतिं दर्शयति । आनन्दमयविज्ञानमयादीनां सामान्यवाचका गुणिसामान्यवाचिनी लिङ्गात्मका इत्यर्थः । गुणवाचिन आनन्दादयो नामात्मकाः । अन्नादयो गुणिविशेषवाचिनो नामात्मकाश्चशब्दपरिगृहीताः । यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान् । तदेव ब्रह्म परमं कवीनाम् । येऽन्नं ब्रह्मोपासते । सह ब्रह्मणेत्यादिब्रह्मशब्दाभ्यासः । एतद्रूपास्त्वेतद्रूपं यासां ता एतद्रूपा वाधूलकादय आद्य । आनन्दमय इत्याद्यैः शब्दैर्हरिः स्वयं वाच्यो न ब्रह्मादयः । तेषां मुख्यब्रह्मत्वाभावात् । अन्नमयप्राणमयमनोमयविज्ञानमया अन्नं प्राण इत्याद्या आद्यशब्दार्थाः । उपलक्षणत्वमित्यादेरयमर्थः । आनन्दमयोऽन्तरो द्युभ्वाद्यायतनमित्यादिसौत्राणां शब्दानां तत्तच्छाखागतशब्दान्तराणामन्नमयादीनामुपलक्षणत्वमस्ति । तत्तन्निर्दिष्टबलादेव तेषामपि ग्रहणोपपत्तेः । सूत्रस्याल्पाक्षरतयैव सर्वशाखाविनिर्णयार्थमेव । एवं तर्हि तत्तत्समाख्याबलेन सर्वशाखासमन्वयसम्भवात्किमधिकरणान्तरारम्भ इत्यत आह ॥ **पुनश्चेति** । ततः समाख्यादेरपि प्राबल्येन शङ्काप्रापकाद्धेतोर्निमित्तात्तन्निरासायाधिकरणान्तरम् । तत्रात्यतिप्राबल्येन सिद्धान्तप्रापकाद्धेतोरिति वा । सर्वे वेदा यत्पदमामनन्तीति कठश्रुतिं सूचयति ॥ **सर्व इति** । अनन्तवेदवाच्यस्य ब्रह्मणः प्रतिपादनमुपलक्षणयैव हि घटत इत्याशयः । एवं चेदन्नमयशब्दस्य प्राथमिकत्वात्किमिति सूत्रयित्वाऽन्यान्नोपलक्षितवान् । अथवाऽन्नं प्राण इत्यत्र श्रूयमाणमन्नशब्दं सूचयित्वा तेनान्यात्किमिति नोपलक्षितवान् । न हि नामपादे विशेषप्रयोजनं विना लिङ्गविचारस्य

सावकाशत्वमित्यत आह ॥ **आनन्दमयेति** । अन्योऽन्तर आत्माऽऽनन्दमयः । प्रस्तुत आनन्दमयाख्यरूपे तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मणः पुच्छतोक्तित आनन्दमयस्वरूपस्य समस्तस्याब्रह्मताप्राप्तेस्तन्नि-रासायानन्दमयनाम सूत्रितम् । तस्माद्ब्रह्मानन्दमय एव । न तु पुच्छमित्यभिप्रायः । तन्निरासाभावे ब्रह्मणोऽवयवित्वासिद्धेस्तज्जिज्ञासाया एवासम्भवात् । ब्रह्मशब्दस्य चेत्यादेरयमर्थः । येऽन्नं ब्रह्मोपासते । ये प्राणं ब्रह्मोपासते । अस्ति ब्रह्मेति चेद्वेद । विज्ञानं देवाः सर्वे । ब्रह्मज्येष्ठ-मुपासते । आनन्दं ब्रह्मणो विद्वानिति पञ्चस्वरूपप्रकरणे । अधीहि भगवो ब्रह्मेति । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेत्यादिशाखाविशेषे च ब्रह्मशब्दस्य चाभ्यासात् । चशब्दाद्ब्रह्म पुच्छमित्युक्तेश्च । ब्रह्मत्वमवयवतयैव ब्रह्मणोऽवयवानामेवावयविस्वरूपत्वतः । यथैवावयवस्वरूपस्य कृष्णकेशात्मनः कृष्णस्यापि ब्रह्मता तथा सर्वत्रावयवे हि ब्रह्मता स्यात् । एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारं क्लेशहानिं करिष्यत इति विष्णुपुराणे । एवमुक्त्वा ततो राजन्महायोगीश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरमिति भगवद्गीतासु । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितमिति तापनीयश्रुतौ । ब्रह्मशब्दं शङ्करविषयमाशङ्क्य तत्परिहाराय योजनान्तरं दर्शयन्नाह ॥ **ऋतं सत्यमिति** । समानाधिकृतत्वं चेत्पूर्वोत्तरार्धयोः समानाधिकृतत्वमेव युक्तमिति चेदुत्तरत्रोक्तं नीललोहितरूपं पूर्वार्धोक्तकृष्णपिङ्गलरूपेण निमित्तेन पुनरुक्तं भविष्यति । तथाऽपि परब्रह्मत्वं रुद्रादन्यस्य न सम्भवति । तस्य ब्रह्माधिपतित्वोक्तेरित्यत आह ॥ **ब्रह्मेति** । अत्र तापनीयश्रुतावेव पुर उपरि वाक्ये ब्रह्माधिपतिरिति समासपदं स्वरितब्रह्मशब्दान्तत्वाद्बहुव्रीहित्वमेष्यति । तादृशस्य बहुव्रीहित्व उदाहरणमाह ॥ **स्वाहेति** । इन्द्रशत्रुर्वर्धस्व स्वाहेति मन्त्रे इन्द्रशत्रुरित्ति पूर्वपदान्तत्वाद्बहुव्रीहितामगादिति यत्तस्माद्ब्रह्माधिपतिरित्यपि बहुव्रीहित्वमेत्येव । तस्मादस्येन्द्रः शत्रुरभवदित्युत्तरश्रुतेरिन्द्रशत्रुसमासस्य

बहुव्रीहित्वं निश्चीयते । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति शिक्षायां पूर्वान्तस्वरिते पुंसोर्बहुव्रीहिरिति सूत्रितम् । पुंसो विवक्षायां पूर्वपदान्तस्य स्वरितत्वे बहुव्रीहित्वं प्राप्नुयात् । अश्वपते गोपते इत्यादावश्वपूर्वान्तस्वरितत्वाद्बहुव्रीहित्वं स्यात् । तद्व्यवच्छेदाय पुंसोरित्युक्तम् । ऋतत्वादिकमित्यादिशब्दजातस्य नाभावित्यादि द्रष्टव्यम् । विष्णोः कृष्णादिरूपतयोत्पत्तिस्तु स्वलोकात्केवलमत्रावतारणत्वेनावगता न तु देहाद्युत्पत्त्या । तस्मान्मत्वर्थादिविरोधः स्यात् । किन्तु विरिञ्चादिष्वपि ब्रह्मशब्दस्योपचारतो वृत्तेर्ब्रह्मशब्दाभ्यासस्तद्विषयः किं न स्यादित्यत आह ॥ **प्रस्ताव इति ।** ब्रह्मविदाप्नोति परमिति ब्रह्मणो ह्युपक्रमोऽतस्तद्ग्रहणे युक्ते सति नामुख्यं गृहीतुं युज्यते । अत्रान्नमयादिषु विकारवाचिनो मयट्शब्दस्य श्रवणाद्विकाराभिमानिनां ब्रह्मादीनां वाच्यत्वप्राप्तिः । विकारात्मकानां शब्दानां कोशादीनां वेत्याशङ्क्य परिहाररूपेण **विकारशब्दान्नेति चेन्न प्राचुर्यादिति** सूत्रं विवृणोति ॥ **प्राचुर्यार्था इति ।** अत्र श्रूयमाणमयटः सर्वेऽप्यत्र प्राचुर्यार्थाः प्रतिपादिताः । अन्नमयादिश्लोकेष्वन्नं हि भूतानां ज्येष्ठम् । प्राणं देवा अनुप्राणन्ति । विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमित्यादौ सर्वज्येष्ठत्वसर्वदेवादिचेष्टकत्वाद्युक्त्या तत्तत्प्राचुर्यमेव हि प्रतिपाद्यते । न ह्यपूर्णस्यैते गुणाः सम्भवेयुः । विकारप्रधानप्राचुर्येषु मयडिति प्राचुर्येऽपि मयटः प्रवृत्तिर्दृष्टा । नन्वद्यतेऽत्ति च भूतानीत्यत्तृत्ववचनान्न प्राचुर्यमात्रं विवक्षितम् । विकारित्वमेवेत्यत आह ॥ **भोग्यत्वमिति ।** उपजीव्यतया भोग्यत्वमेवाद्यत्वम् । न भक्ष्यत्वम् । अतोऽन्नमय इत्यन्नमयरूप एव प्रचुरः । प्रचुरान्नमिति यावत् । तथा च महाभोक्ता महाभोग्य इत्युक्तं स्यात् । तदेतदाह ॥ **महाभोक्तेति ।** अन्नमयेऽन्नमयशब्दे । ननु तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय इत्यादौ पौरस्त्यात्पाश्चात्यस्यान्यत्वकथनान्नैकरूपाण्येतान्यत्रोच्यन्तेऽभिन्नोऽपीति । अत्र प्रमाणमाह ॥ **अभेदेति ।** भृगोरर्थे वरुणोऽप्येतदेवान्नमयादिरूपं वदिष्यत्यन्नं प्राणमित्यादिमयट्शब्दश्रवणादन्य उच्यत इत्यत आह ॥ **प्राप्यत्वेनेति ।** एतमन्नमयमात्मानमुपसङ्क्रामतीत्यादिना

तेषामेवोपासितानां प्राप्यत्वेनोपरि मयट्शब्देन सह प्रोक्तस्तत्राप्यन्यद्वारादिकं नोच्यते। अतोऽन्नमयोऽपिशब्दात्प्राणमय इत्यादिरपि प्रचुरान्नादिरेवोच्यते। इह तैत्तिरीयश्रुतौ ब्रह्मणोऽन्यद्वारकोशादिकं किञ्चिदपि नोच्यते। **तद्धेतुव्यपदेशाच्चेति** सूत्रं विवृणोति॥ **महानन्दत्व इति।** को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादिति। यद्येष आकाश आनन्दो न स्यात्। तर्हि क एव सामान्येन चेष्टेत को वा प्रकर्षेण चेष्टेत इत्यत्र महानन्दत्व एव हेतुरुक्तो न ह्यनानन्दमात्रत्वे नाप्यानन्दविकारत्वे। तत्प्रतिपादयति॥ **श्रुत्यन्तर इति।** यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोतीत्युक्त्वा यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति सुखशब्देन पूर्णसुखमुक्तमिति यस्मात्तस्मान्महानन्दत्व एवायं हेतुः। यत्प्रवृत्तिरित्यादेरयमर्थः। सुखादुःखाच्च लोके प्रवृत्तिर्दृश्यत इति यतः सर्वशक्तेर्न दुःखं सम्भवतीति यतोऽतः केवललीलया केवलानन्दमूलचेष्टयाऽयं सर्वप्रवर्तको न चेदस्वतन्त्रेऽस्मिन् जगति क एव पुमान्प्राण्यादिति सुखप्राप्त्यर्थं दुःखपरिहारार्थं च प्रवृत्तिदुःखनिवृत्तायामेवान्तर्भूतासम्भवेति हि दुःखं सुखप्राप्त्याशायां तत्प्राप्तिपर्यन्तम्। आशा हि परमं दुःखमित्यादेश्च। **मान्त्रवर्णिकमेव च गीयत** इति सूत्रं विवृणोति॥ **ब्रह्मवित्परमाप्नोतीति।** यद्ब्रह्मोपक्रमे सूचितं तदेव सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णेन लक्षितम्। सत्यज्ञानानन्दादिलक्षणत्वेन प्रकाशितम्। तत्र मन्त्रवर्णे सृष्ट्युक्त्येति शेषः। मनसा विज्ञानेनाप्युक्तमिति शेषः। कथं सत्यादिशब्दार्थत्वं सृष्ट्यादेरित्यत आह **सद्भावमिति।** सद्भावः सत्यवस्तूनां सत्ता तत्त्रिविधामपि यापयतीति सत्यम्। इत्येषा सत्यशब्देन सूचिता। सृष्टिरिहान्नमयादिश्लोके विस्तरश उक्तेति स्थापनायैवेत्येतमर्थं स्थापयितुमेवोक्ता हि सृष्टिः। अन्नाद्भूतानि जायन्त इति सत्त्वमेव जीवनं चेदप्यत्रोक्तं जातान्यन्नेन वर्धन्त इत्यादि। षद्लृविशरणगत्यवसादनेष्विति धातोर्विशीर्णता च सत्त्वं स्यादप्यत्रोच्यते। अत्ति च भूतानि। सन्नं तु वर्धितं प्रोक्तं सन्नं शान्तं च सूरिभिरित्यादौ विनष्टं सन्नमित्याहुरेव हि। अतोऽद्यताऽत्तृतारूपत्वमनन्तत्वं सत्यशब्दार्थः स्यादेव हि। अद्यता नामोत्पत्तिवृद्ध्योरुभयत्राप्युपजीव्यता। अत्तृता संहर्तृत्वं

प्राणमित्यादिना चेष्टारूपिणी गतिरुच्यते। प्राणो हि भूतानामायुरिति जीवनमायुर्निमित्तत्वादायुः। मनु अवबोधन इति धातोर्मनो विज्ञानमेव। नाल्पे सुखमस्ति भूमैव सुखमिति प्रोक्त्यैव सुखशब्दस्यानन्तसुखवाचित्वादत्र भगवत एवानन्दमयत्वोक्तितो मन्त्रवर्णोक्तमनन्तत्वं सुनिर्णीतम्। परिपूर्णरूपं पूर्णाल्पके न स्याद्धि स्वव्याहतेरेव। उक्तार्थं निगमयति ॥ **अतो हीति**। परयोत्तरभागश्रुत्या। यस्मादित्युक्तार्थं परामृश्य तमित्यपि हेतुं करोतीत्युत्तरसूत्रं व्याचक्षाणो भगवान्मध्वदेवो मन्त्रवर्णे तु ब्रह्मण इतरस्यानुक्तत्वादुत्तरभागश्रुतेर्मन्त्रवर्णविस्ताररूपत्वात्तत्रेतरवाच्यत्वानुपपत्तेरुत्तरो ब्रह्मादिः प्रकृतिर्वाऽत्र तैत्तिरीयश्रुतौ न प्रतिपाद्यत इत्यर्थः। **नेतरोऽनुपपत्ते**रित्यस्यार्थान्तरमाह ॥ **पुरुषमिति**। तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यत इति श्रुतेर्विष्णुवेदिन एव मोक्षः। अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। एतमानन्दमयमात्मानमुपसङ्क्रामतीत्यादिनोच्यते। अत्रानन्दमयान्मोक्षः। विष्णावेव पुरुषशब्द इत्याह ॥ **पुरुष इति**। तेन विष्णोरन्यस्य पुरुषत्वनिषेधेन मोक्षप्रतिषेधेन च। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमय इत्यादिश्रुतयः। नन्वाकाशाद्वायुरित्यादि भूतसृष्टिमुक्त्वौषधीकार्यान्नमयं पुरुषशब्दं प्रस्तुत्यान्नमयप्रतिपादनात्कथमितरकोशा नोच्यन्त इत्यत आह ॥ **ब्रह्मेति**। लरूपत्वाद्धकारस्य वकारः कुत्रचिच्छब्दस्यादिग्रहणेनैव तदर्थ उच्यते। उकारो द्वितीया मात्रा। उत्कर्षादुभयत्वाद्वेतिवत्। उपास्तेषु धातृत्वदोषधिः। पुरि शेत इत्यत्र तृतीयेऽतिशय इति न्यायो द्रष्टव्यः। न चोक्तान्नमयो न बाह्यो लोकान्नमयाख्यः कोशोऽन्नरसमयः। रसो वै स इति रसशब्देन विशेषणात्। कथं तस्येदमित्यादौ प्रत्यक्षन्व्यपदेशात्परमात्मोच्यत इत्यत आह ॥ **इदमिति**। तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतेरन्यस्य कोशादेर्न मुच्यते। उच्यते चास्मिन्प्रकरणेऽन्नमयादिज्ञानान्मोक्षः। एतमानन्दमयमात्मानमुपसङ्क्रम्येत्याद्युक्तयुक्तेरेव ब्रह्मादीनामपि परित्यागायोगाद्विष्णोरन्यस्य नानन्दमयत्वं स्यादित्याशङ्कापरिहारार्थं **भेदव्यपदेशाच्चेति** सूत्रं योजयति ॥ **नेत्यादिना**। समन्वयादौ प्रासङ्गिकतया व्याख्यातमन्योन्यकोशपृथ-

गित्यत्र पूर्णता। एतमन्नमयमात्मानमुपसङ्क्रामति। एतमानन्दमयमात्मनमुपसङ्क्रम्येति स्थानद्वयेऽप्येवं श्रुतपरित्यागाश्रुतकल्पने तेषां स्यातामिति शेषः। अस्माल्लोकात्प्रेत्येत्युक्तायां मृतायामेव तेन शरीरतयाऽभिहितस्यान्नमयशब्दस्य परीत्यागः कृतो हि। तस्मादन्नमयादीनामप्यतिक्रमाभिप्राये पुनरुक्तिः। अन्नमयादिशब्दानां ब्रह्मशब्दस्य वा सामानाधिकरण्यतः। अधीहि भगवो ब्रह्मेति भृगुणोक्तो वरुणोऽन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ह्याह। तत्कथं ब्रह्म न भवति। शाखाचन्द्रदर्शनन्यायेन ब्रह्म दर्शनद्वारम्। न तु ब्रह्मेति वादिनः कथं गुरुप्रसादनप्रकारं विद्युः। चक्षुरादीनामन्नमयादिषु सहपाठे पुनर्यतो वा इमानि भूतानि जायन्त इत्यादिना सामान्योपदिष्टानां सृष्ट्यादिब्रह्मलक्षणानां तेष्वनुक्तेः कथमद्वारत्वमित्यत आह॥ **चष्ट इति**। चक्षुरादिमत्त्वेनोपदिष्टं तद्ब्रह्मैव हि यतो वा इत्यादिना सृष्ट्यादिकारणत्वेनोक्तमित्यभिप्रायेणाह॥ **ब्रह्मसृष्टिः सृष्ट्यादिकरणमिति**। एवं क्वचित् षड्रूपत्वं क्वचित्पञ्चरूपत्वमपरत्राष्टरूपत्वं चोक्तम्। तस्मान्मिथो विरोध इत्यत आह॥ **आवापेति**। गुणरूपादीनामावापोद्वापतः। यतो वा इमानि भूतानि जायन्ते। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्मेति लक्षितं गुरुणा। स तपोऽतप्यत। स तपस्तप्त्वा। अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रम्हेति। तं होवाच। तपसा ब्रम्ह विजिज्ञासस्व। तपो ब्रम्हेति। स तपोऽतप्यत। स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येवेत्यादि ब्रह्मत्वेन श्रुतमन्नादिकम्। अत इति ब्रह्मेति हि मायिनो वदन्ति। इति लज्जा तदुक्तिष्विति हेतोस्तेषां श्रुतियोजनानुवादेषु लज्जा वर्ततेऽस्माकम्। **अस्मिन्नस्य च तद्योगं शास्तीति** सूत्रार्थमाह॥ **समीप इति**। भास्करीयास्तावदन्नमायादिषु मयटो विकारार्थत्वं कल्पयन्ति। आनन्दमये प्राचुर्यम्। तन्निराकरोति॥ **एतेनेति**। अधिकरणार्थं निगमयति॥ **अत इति**। गुणवाचका आनन्दादयः। गुणिवाचका अन्नमयादयः। ननु जन्माद्यस्य यत इति सूत्रेण जन्मादिकारणत्वं

ब्रह्मणो लक्षणत्वेन प्रतिज्ञातमुपपद्यते च। तच्च ज्ञानप्रयत्नेच्छादिमत ईश्वरस्यानन्दाद्यनन्तकल्याणगुणप्रतिपादनात्मकः समन्वयः किमर्थ इत्यत आह ॥ **जन्मेति ।** गुणसर्वस्वसिद्धये गुणसर्वस्वरूपसिद्धये न तु केषाञ्चिद्गुणानां सिद्धये। तद्गुणसर्वस्वं शास्त्रमूलमिति यतस्ततः। सर्वशास्त्रशब्दानां समन्वय एव गुणसर्वस्ववेदकः। प्राणादिशब्दानां प्रवृत्तिहेतूनां प्रकृष्टत्वादीनां तस्मिन्भगवति सम्बन्धात्। तन्निमित्तत्वतोऽल्पस्यापि भगवन्निमित्तत्वतः ॥ ६ ॥ **अन्तस्तद्धर्मोपदेशादिति** सूत्राभिप्रायमाह ॥ **देवानामिति ।** शक्ततां तत्र तत्र समन्वयधर्मित्वे समर्थताम्। **भेदव्यपदेशाच्चान्य** इत्यभेदं न्यवारयत्। नन्वस्तु चेतनानां प्रवर्तकत्वेन हरेस्तच्छब्दवाच्यत्वम्। आकाशाद्यचेतनं हि तत्स्वभावस्य विवरत्वादेः परेणानियतत्वात्कथं तच्छब्दवाच्यत्वमित्याशङ्काभिप्रायः ॥ ७ ॥ **आकाशस्तल्लिङ्गादिति** सूत्रं व्याख्याति ॥ **आकाश इति ।** पूर्वशब्दादनन्तत्वं द्रष्टव्यम्। आदिशब्दाद्यस्तम्भानाकमृष्वं बृहन्तं दाधर्य प्राचीं ककुभं पृथिव्या इत्यादि ॥ ८ ॥ एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते। एतेन ह वाव पयो मण्डं भवतीति शरीरे यच्चेष्टावत्प्राणवद्भवति। यत्प्राणवन्न भवति तच्चेष्टावन्न भवतीत्यन्वयव्यतिरेकाभ्यां चेष्टायाः। आदिशब्दाज्जीवः। अत एव प्राण इत्यतिदेशः। प्राणादिनाम्नां लिङ्गमात्रेण कथमनुकर्षणमित्यत आह ॥ **लिङ्गमिति ।** अस्यापि नामवतोऽपि ॥ ९–१० ॥ शब्दस्य गायत्र्यादिशब्दस्य। नित्यत्वात्स्वभावस्य च नित्यत्वात्कथं हरिनिमित्तभूतः स्यात्। अग्न्यादौ प्रसिद्धानां ज्योतिरग्निगायत्र्यादिप्रबलशब्दानां तद्धरेरेव तच्छब्दजातं हरेरेव वाचकम्। हरेरेव पुरुषामृतादिश्रुतीनां चरणाभिधानलिङ्गानां च बाहुल्यान्नित्यानां नित्यत्वस्यापि नियामकत्वं तादृशत्वम्। बाहुल्य इत्यादेरयमर्थः। प्राणादिश्रुतीनां प्राणविसंवादिलिङ्गानां च बाहुल्यसाधकत्वेनाङ्गीकृते सति तत एवान्यस्य मुख्यप्राणस्य मुख्यवाच्यत्वमिति मतं चेन्न। अत्र हि मुख्यप्राणस्य ता अहिंसन्त। अहमुक्थमस्म्यहमुक्थमस्मीति। ता अब्रुवन्। हन्तास्माच्छरीरादुत्क्रमाम। तद्यदस्मिन्न उत्क्रान्ते इदं शरीरं पत्स्यति तदुक्थं भवतीत्यादिः प्राणसंवादः ॥ ११ ॥ पूर्वशब्दात्प्राणनिर्गमनादि। तं शतं वर्षाण्यभ्यार्चत्।

प्राणो वंशत्रमिति स्थविरः शाकल्यः । तदस्य प्रथमं जन्मेत्यादीनि जीवलिङ्गानि । न केवलमस्य शास्त्रस्य मुख्यस्य मुख्यतः पारिदृश्यमान एवार्थ इत्याह ॥ **वासुदेवेति** । सर्वशः सर्वशास्त्रे चतुरध्याये विभागेनाध्यायपादविभागेन पादे त्वधिकरणानां चतुर्धा विभागेनाधिकरणादिषु सूत्रादीनां चतुर्धा विभागेन । अथ प्रत्यधिकरणं नारायणसहितत्वेन पञ्चमूर्तिर्वा प्रतिपाद्यते । प्रतिसूत्रं पादादित्रिभागेन प्रतिपदमक्षरविभागेन प्रत्यक्षरं स्वरव्यञ्जनाद्यन्तं सन्धिसन्धानविभागेन तैस्तैस्तदुचितैर्युक्त्यागमैर्विषयसंशयादिकॢप्तिरूपन्यायविशेषैश्च सहैव प्रोक्तः । यथा पुरुषाणां योग्यता । इदं सूत्रजातं बृहत्तन्त्रप्रमाणेनैवंबह्वर्थवत्पर्यवसीयते । व्याख्यातार्थता ह्येतेऽर्थाः सूत्रजातस्य बृहत्तन्त्रोक्तयुक्त्यादिभिस्तथाऽप्यस्माभिः सङ्ग्रहादुच्यते । ननु बह्वर्थानां सूत्राणामिदं व्याख्यानं नानुरूपमित्यत आह ॥ **ग्रन्थ इति** । महागुणोऽनन्तगुणः । अनन्तवेदपदात्मकानां नाम्नां पुनरुक्तिरहितत्वतस्तत्प्रतिपाद्यानां गुणानामप्यनन्तत्वं स्यात् ॥ १२ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यविरचितायां नयचन्द्रिकायां प्रथमाध्यायस्य प्रथमः पादः ॥ १—१ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ पादसङ्गतिं दर्शयति ॥ **लिङ्गात्मकानामिति** । ज्ञापयितुं विचार्यत इत्यर्थः । कथं विशेषेणापि कर्मकर्तृत्वसम्भवे आत्मानं परस्मै शंसतीत्यादिकर्मकर्तृत्वव्यपदेशो भेदस्य साधक इत्यत आह ॥ **कर्मेति** । अहं मां जानामीत्यादौ भेदस्याभावेनापोदितत्वाद्विशेषे सत्यभेदः स्यात् । औत्सर्गिकभेदोऽप्यनपोदितो बली । अधिकरणविषयान्विशिनष्टि ॥ **हीति** । एतस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवतीत्यादिश्रुतिमुदाहृत्य **सर्वत्र प्रसिद्धोपदेशादि**त्यत्रोक्तं सर्वत्र स्थितिरूपं भावाभिधं लिङ्गम् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वमित्युदाहृत्य**ात्ता चराचरग्रहणा**दित्यत्रोक्तमत्तृत्वात्मकम् । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे इत्युदाहृत्य **गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि**त्यत्रोक्तं पातृत्वं च क्रियायोगे । य एष पुरुषोऽन्तरक्षिणि दृश्यत इत्युदाहृ-

**त्यान्तरिति** सूत्रोक्तमन्तःस्थित्योपेतं रमणं क्रियाभावाख्यं लिङ्गम् । एष त आत्माऽन्तर्याम्यमृत इत्युदाहृत्य **अन्तर्याम्यधिदैवादिषु तद्धर्म-व्यपदेशादि**त्युक्तमन्तःस्थितिसहितं यमनं च क्रियाभावाख्यलिङ्गम् । यत्तदद्रेश्यमित्युदाहृत्य **वैश्वानरस्साधारणशब्दविशेषादिति** श्रुतिन्नमित्यर्थः । एतेन नामसमन्वयेऽपि लिङ्गसमन्वयासिद्धिरस्तीति दर्शयितुं लिङ्गाधिकेत्युक्तम् । ब्रह्मलिङ्गेत्यर्थः ॥ १ ॥ सविशेषो क्रियात्मकविशेषोऽपि कथं क्रियाख्यविशेषे स्वरूपद्वयाङ्गीकारात् । भेदप्राप्तेरपि नाशित्वमित्यत आह ॥ **शक्तितेति ।** क्रियाशक्तिता व्यक्तिता चेत्युभयरूपो विशेषः परमेश्वरेण चाभिन्नोऽपि तस्मात्परस्परविशेषवान्व्यवह्रियते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिः । क्रियाज्ञानादि-नियतेत्याबुक्तेः सद्भावस्तत्रैव तदन्यत्रैव त्वनित्यता । यथा भीष्मस्य ब्रह्मावेशाद्दृश्यमाना सर्वक्रिया पुनर्द्धुभावे तच्छक्त्यभावादनित्या ॥ २ ॥ ऋतं पिबन्ताविति द्वित्वं च विशेषादेवोक्तन्यायेन युज्यते । **विशेषणाच्चेति** सूत्रं व्याख्याति । यः सेतुरीजानानामक्षरं ब्रह्म यत्परमिति विशेषणादुक्त-वाक्यमन्तर उपपत्तेरिति सूत्रितस्यान्तरशब्दस्य य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यन्तरशब्दश्रवणात्कथं तस्य विषयवाक्यत्वमित्यत आह ॥ **आदेयं मातीति ।** सुखमनुभवतीति योजनायामात्मशब्दे रमणमुच्यत एव । **सुखविशिष्टाभिधानादिति** सूत्रं योजयति ॥ **विशिष्टेति ।** कं ब्रह्मेति सुखमात्रमेवोक्तं न हि विशिष्टविषयमित्यत आह ॥ **ब्रह्मत्वमिति । अनवस्थितेरसम्भवाच्च नेतर इति** सूत्रार्थमाह ॥ **अन्योन्येति ।** लोकदृष्ट्याऽन्योन्यनियतिरेव । एनं जीवमन्यो जीवो नियच्छेदिति नियतिरेव सम्भवेत् । तारतम्यस्य स्वभावत्वादुत्तमस्याधम-नियमसम्भवात् । कुत ईश्वरादेः पक्षत्वादित्यत आह ॥ **चेतनानामिति ।** तस्मादीश्वराङ्गीकाराज्जीवस्य जीवान्तरमित्यनवस्थितिः । पारतन्त्र्येण स्वस्यैव नियम्यत्वात् । अनियमेऽसम्भवश्च । अथास्याप्यन्यो नियन्ता निरीश्वर इत्यत आह ॥ **ईश्वर इति** ॥ ३—४ ॥ प्रथमागत उपपत्त्या-दिभिः प्रथमं नियामकत्वेन प्राप्तो वृथाऽवस्थितिकल्पना । प्रयोजनं प्रमाणं च विनैकस्यान्यस्मिन्नास्तीति कल्पना ॥ **अन्तर उपपत्ते**रि-

त्युक्तम् । रमणं न सम्भवतीत्याशङ्कामुद्भाव्य तत्परिहारार्थम**न्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादिति** । सूत्रं योजयति ॥ **रमण-मिति** । स्वाधीनवस्तुशक्तिक्रियादिकं वस्तुगुणेत्यादेराशङ्कावाक्यस्यायमाशयः । यदि भावरूपधर्मा अभेदिनो ब्रह्मणस्तर्हि तद्विरुद्धानां यत्तदद्रेश्यमित्युक्तानामभावधर्माणां कथमभेदइति ॥ ५ ॥ **अदृश्यत्वादिगुणको धर्मोक्तेरिति** सूत्रम् । अभावो भाव इत्यनयोर्धर्मयोः प्रायशो विशेषो न भवेद्धि । अत्र विशेषो वैलक्षण्यं भेद इत्यर्थः । तुशब्दादेकस्मिन्धर्मिणि प्रतीतयोरतद्भावः पटाभावोऽन्यताच घटतेऽनयोश्च कश्चन भेदोऽस्ति । गुणास्तवैष स्मितमुक्तमुक्तं भजन्त आरोग्यमायुः प्रतिभाबलं च । अनाविलं चास्य भवेदपत्यं मातावदन्यूनमिति हि प्रतीतिर्लोकप्रसिद्धिः । कथं विरुद्धयोर्भावाभावयोरभेद इत्यत आह ॥ **भावेति** । ननु ब्रह्मणस्तद्गुणानां च द्रव्ययोरिव पृथक्त्वासम्भवेऽपीतरेतराभावाख्यो भेदःस्यात् । तथा सति भावधर्माणां साक्षाद्भेदः स्यादित्यत आह ॥ **पृथक्त्वेति** । आदिशब्दात्सम्बन्धापेक्षया त्वनवस्थितिः । श्रुत्यादिविरोधश्च । यथा समवाय एकस्मिन्नपि कार्यकारणगुणगुण्यादिस्थानेषु विशेषेण बहुरूपोऽङ्गीकार्यः । घटस्य पटाद्भेद इति स्वरूपभूत एव भेदो विशेषेणाङ्गीक्रियते । यथा पटस्य स्वरूपेणाभेद इति ॥ ६ ॥ पादद्वयार्थं निगमयति ॥ **वङ्हिति** । यथा जनार्दनस्य मुख्यवाचकत्वतस्तानि लिङ्गानि तत्तत्प्रकरणगतानि पुरुषविधत्वादीनि ते शब्दास्तत्प्रकरणगता ब्रह्मादयस्सर्वेऽपि विष्णुलिङ्गा हि । एषामानन्दमयाकाशादिशब्दानां तद्वस्तुषु परिदृश्यमाना लौकिकी रूढिर्बहुलत्वात्कथं भगवति बाधकमित्यत आह ॥ **बहुलेति** । तत्तस्माज्जनार्दनस्य मुख्यवाचकत्वात् ॥ ७ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्य-विरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां नयचन्द्रिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥ १—२ ॥

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ तत्रेत्यादिना पादसङ्गतिं दर्शयति । उक्तयुक्तिभिर्विष्णावेव प्रसिद्धिरङ्गीकर्तव्या । अन्यत्र प्रसिद्धिबलादन्यत्रापि स्यादेव । अन्यथा व्यवहारस्यैवासिद्धेरिति पूर्ववादिमतानुवादेन तत्रान्यत्रेत्याह । **द्युभ्वाद्यायतनमिति** सूत्राभिप्रायमाह ॥ **विष्णा-**

**विति** ॥ १ ॥ **भूमा सम्प्रसादादध्युपदेशादिति** सूत्राभिप्रायमाह ॥ **भूमेति** । सम्प्रसादः सुखादिकत्वम् ॥२॥ **अन्यभावव्यावृत्तेश्चेति** सूत्रार्थमाह ॥ **अत इति** । ॥३॥ अस्थूलमनन्वण्वह्रस्वमित्यादिवाक्यं विरुद्धवद्भातमपि वेदवाक्यं तत्त्वतो व्याख्याय हरौ योजनीयम् । अतो वेदवाक्यत्वतः । सर्वनामा सर्वकर्मा सर्वधर्मा सर्वलिङ्ग इत्यादिना द्युभ्वाद्यायतनादीन्विषयानाह ॥ **बाहुल्यमित्यादिना** । पूर्वपक्षसिद्धान्तयुक्तीराह ॥ **मुक्तोपसृप्य व्यपदेशादिति** । मुक्तोसृप्यताऽमृतस्यैष सेतुरिति तत्रोदाहरणश्रुतिः । **भूमा सम्प्रसादिति** प्राणादाधिक्यमेष वा अतिवदति यः सत्येनातिवदतीति श्रुतिः । **अन्यभावव्यावृत्तेश्चेति** । स्वभावस्य सर्वतो वैलक्षण्यमस्थूलमनाण्वित्यादिश्रुतिः । **ईक्षति कर्मव्यपदेशात्स** इति प्रेक्षापूर्वक्रिया सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजतेत्यादिश्रुतिः । **गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं** चेत्यत्रारस्य ण्यस्य चेशत्वमरश्च ह वैण्यश्चार्णवौ ब्रह्मलोक इति श्रुतिः । **अनुकृतेस्तस्य चे**त्यत्र सूर्यचनुकृतिस्तमेव भान्तमनुभाति सर्वमिति श्रुतिः । **शब्दादेव प्रमित** इत्यत्र वामनाख्या मध्ये वामनमासीनमिति श्रुतिः । **कम्पनादिति** सर्वकम्पः प्राण एजति निःसृतमिति श्रुतिः । **ज्योतिर्दर्शनादि**त्यत्र विष्णुरेव ज्योतिरित्यादिश्रुतिबलाज्ज्योतिःशब्दस्यानन्यसिद्धता । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरित्युदाहरणश्रुतिः । आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मेति श्रुतिः । अत्र भेदस्योपजीव्यप्रमाणता । उपजीव्यमानज्योतिःश्रुतिः **सुषुप्त्युत्क्रान्त्योर्भेदेने**त्यत्र भेदस्योपजीव्यमागमः । प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनाऽन्वारूढ इति श्रुतिः । **पत्यादिशब्देभ्य** इत्यत्र सर्वैश्वर्यम् । एता युक्तयस्तु विशेषेण प्रकर्षेण दर्शिताः । न तु केवलं सूचिताः । देवानामधिकारः शूद्राणां तद्धानिः । **मध्वादिष्वसम्भवादनधिकारं जैमिनिः । भावन्तु बादरायणोऽस्ति हीत्ये**तयोर्विरोधो नास्तीत्याह ॥ **तत्फलायेति** । तत्फलाय तत्रोक्तवस्तुत्वादिफलार्थमुपासाया विधिर्निराकृतः । सिद्धे ब्रह्मणो गुणजाते चान्यार्थं मोक्षे सुखविशेषार्थमसिद्धेऽर्थे ब्रह्मणो

गुणजाते उपासाया विधिः स्यादिति विद्याधिराजस्य मतम् । सर्वगुणजातं सर्वदा न प्रकाशते हि विद्याधिपतिरनन्तविशेषज्ञः । जैमिन्याद्याः सामान्यवेदिनः । अतस्तन्मतयोः सामान्यविशेषरूपत्वान्न विरोध इत्याह ॥ **नित्यमिति** । ब्रह्मणस्तथात्वाभावेऽप्यशेषवस्तुगतविषयत्वेन ॥ ८ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां प्रथमाध्यायस्य तृतीयः पादः ॥ १—३ ॥

॥ श्रीगुरुभ्योनमः हरिः ॥ ॐ ॥ श्रुतिलिङ्गादिभिरन्यत्र प्रसिद्धानां शब्दानां ब्रह्मणि वृत्तिं दर्शयत्यस्मिन्पादे । **तदधीनत्वादर्थवदित्य**स्यार्थमाह ॥ **दुःखीत्यादिना** । पराजयवतां तदधीनत्वहेतोर्यथा राज्ञि पराजयशब्दः पराजयवान् राजेति । तदेवोपपादयति ॥ **स्वातन्त्र्यमिति** । प्रवृत्तिहेतूनां गुणादीनां स्वातन्त्र्यं तस्य स्वाधीनत्वं विजयस्यान्यगतत्वे सत्यपि स्वातन्त्र्याभासमात्रतो विजयशब्दः प्रयुज्यते हि राज्ञि किमुत परमेश्वरो पूर्णस्वातन्त्र्यादित्याकूतम् । तर्हि भृत्यस्य बन्धच्छेदादौ सति बन्धच्छेदादिपदं किमिति राज्ञि न प्रयुज्यत इत्यत आह ॥ **भृत्यबन्धेति** । बन्धादिशब्दानाममङ्गलत्वात्प्रयोगनिवर्तनं स्यात् । अमङ्गलानुपपत्तेरप्रियत्वाच्चामङ्गलशब्दस्य । एवं सति कुत्राप्यमङ्गलशब्दो न प्रयोक्तव्य इत्यत आह ॥ **गुणा इति** । यत्र येषु तादृशदुःखादयः स्वातन्त्र्यापेक्षया गुणास्तेषु तच्छब्दा अखिला अपि प्रयुज्यन्ते । एवं तद्गतत्वादपि शब्दप्रवृत्तेः स्वातन्त्र्यं मुख्यं कारणम् । ततो नामङ्गलशब्दस्यान्यत्र प्रयोगादेव सर्वस्तुतिविषये विष्णावमङ्गलशब्दोक्तितो वक्तुर्दोषः स्यात् । न हि कुत्राचिन्निन्दार्थानां शब्दानां स्तुतिरित्यत आह ॥ **नैव दोषा इति** । नैव दोषहेतवः । तस्मात्स्वातन्त्र्यस्य मुख्यकारणत्वाद्दोषशब्दास्तत्रैव गुणवाचकान नान्यत्र ॥ १ ॥ **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** इत्यत्र प्रतिपादितं वसन्ते वसन्ते ज्योतिषा यजेतेत्यादौ कर्मादिसमन्वयपदं विशिनष्टि ॥ **जातमिति** । जातं जीत्युच्यते । तृतीयोऽतिशय इति न्यायात् । तस्य चेति ज्योतिषेति सम्बध्यते । हरिः षकारः प्राण आत्मेति श्रुतिः । अयष्टार आयष्टारतैरित आयजेत । भूतं प्रति जयं वा वयतीति भुक्तरक्षणं चिनोतीति कवचम् ।

विशिष्टत्व.द्वौ विष्णौ गताः षड्गुणा वौ षट् । स्वभक्तमाह्वयति स्वीकुरुत इति स्वाहा । स्वरादिभिरित्यादिशब्दाद्बिन्दुनादादयः । वेदपदानामुत्सम्प्रदायं पदविभागदूषणमस्तीत्यत आह ॥ **विज्ञानेति** । एवं सति भगवत्यधिकविज्ञानहेतुत्वात्पदसमन्वय एव स्यान्न वाक्यसमन्वय इत्यत आह ॥ **अङ्गीकृत इति** । तदर्थत्वेन विज्ञानार्थत्वेनाल्पबुद्धय इति तादर्थ्ये चतुर्थी । अल्पबुद्धिषु ज्ञानजननार्थमित्यर्थः । धिष्ण्यं चायमाश्वेति धिष्ण्यास्ताः । भगवन्तमुद्दिश्य को वाचं प्रतिपपाद इत्यस्य पदस्य ब्रह्मवाचित्वेन वक्त्राद्याक्षेपवाचित्वेन चेत्युभयार्थत्वतः । वेदशब्दानां परमेश्वरगुणैकवाचकत्वेन योगो ब्रह्मणः प्रतिपादितश्चेत्तस्य वेदपदानित्यताऽभावान्न विश्वसर्नीयत्वमित्यत आह ॥ **तस्येति** । ॥६॥७॥ अत्राधिकरणेषु विषयानाह । **आनुमानिकमप्येकेषामि**त्यधिकरणे प्रमाणविरोधिनां दुःखिबद्धावरादीनां शब्दानां समन्वय उच्यते । **ज्योतिरुपक्रमाच्चे**त्यत्र क्रियाकर्मकारकत्वादीनां शब्दानां **न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्चे**त्यत्र स्त्रीवाचिनां बाहुल्यानां बहुलार्थसम्बन्धिनां बहुसङ्ख्याविषयाणामित्यर्थः । **कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्ते**रित्यत्रावान्तरकारणवाचिनां शब्दानां **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि**त्यत्र स्त्रीवाचिनाम् । **एतेन सर्वे व्याख्याता व्याख्याता** इत्यत्र शून्यादिशब्दानां निषेधार्थानां स्थानान्यधिकरणानि । एतेष्वधिकरणेषु पूर्वपक्षसिद्धान्तयुक्तिं दर्शयति ॥ **सर्वमानैरिति** । सुप्तिङन्ताव्ययशब्दानां विरुद्धशब्दानां चेति समन्वयो ज्ञातुमशक्य इति यल्लोके वैमुख्यं तदपाचक्रे । **अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके । वाक्यान्वयात् । प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । अवस्थितेरिति काशकृत्स्न** इति जैमिन्यादीनां मतम् । वाक्यसमन्वयप्रतिपादकं वचनं स्वमतं चेत्किमिति जैमिन्यादिमतमित्यवददित्यत आह ॥ **स्वशिष्याणामिति** । ॥५॥ एवं सर्वशब्दसमन्वयपक्षे तत्तदर्थेषु शब्दवृत्तेरभावप्राप्तेर्व्यवहारादिप्रयोजनाभावः स्यात् । अतः सर्वशब्दसमन्वयस्यापि व्यवहारायत्तत्वेनैतदुपजीवकत्वेन निरवकाशत्वाद्भगवन्म-

ताविरोधित्वाच्चायं वाक्यसमन्वय एव ग्राह्यो नापर इत्यत्राह ॥ **तेष्विति** । प्रयोजनबहुत्वेऽस्मदभिमतेषु रूढिरङ्गीकृतैव नतु निराकृता। तस्य तस्य प्रयोजनस्याविरोधतो विष्णौ शक्तिर्ग्राह्या । आचार्योपदेशश्रुतिलिङ्गादिसामर्थ्यात् । अर्चिष्मानर्चित:कुम्भ इत्यादाविव तयोर्व्युत्पत्त्योर्मिथो विरोधे सति का गतिरित्यत आह ॥ **तथाऽपीति** । कथमेतन्मूलत्वमित्यत आह ॥ **अत इति** । कुतो भगवतो निमित्तादन्येषामर्थानां वा शब्दरूढता । अतो लोकव्युत्पत्त्युपजीव्यत्वमत्रैव त्वनायत्तत्वान्नास्योपजीव्यत्वम् । ब्रह्मणि व्युत्पत्तेरप्यन्यव्यवहारायत्तत्वात्कथमस्या एवोपजीव्यत्वमित्यत आह ॥ **तत्सिद्धिरिति** । सा परापेक्षाऽपि हरेरिच्छयेति तदुपजीव्यत्वविरोधः। विष्णोरन्यत्र वृत्तेर्मुख्यतैव न परममुख्यत्वम् । मुख्योपलक्षणा गौणीति तिस्रः । तद्यथाऽयो दहतीत्यत्रायसो दाहकत्वमग्निदाहकत्वमुपजीव्य प्रयुज्यते । एवं तृणादिगतं स्तम्भत्वादिकं भगवतो गुणमुपजीव्य तृणादिषु स्तम्भादिशब्दाः प्रयुज्यन्ते । तस्मादत्र भगवद्गुणवाचित्वे ह्युपजीव्यत्वम् । यद्यपि **तत्तु समन्वयादि**त्यादिना सर्वशब्दानां ब्रह्मवाचकत्वसिद्धेरपि समन्वयादन्यशब्दव्यवहारापेक्षा स्यात् । तथाऽपि सा हरीच्छयेत्यदोष इत्याह ॥ **तत्सिद्धिरिति** ॥ ब्रह्मवाचकत्वसिद्ध्यर्थं शब्दानामर्थान्तरप्रवृत्तावपि तेषु शब्देष्वर्थेषु च नियामकत्वेन स्थितस्य हरेरिच्छया तदपेक्षत्वान्न तद्वाचकत्वस्योपजीव्यत्वविरोध इत्याकूतम् । विरोधेऽन्यत्र मुख्यताऽऽद्यास्तिस्रः शब्दवृत्तयः । शब्दप्रवृत्तीनां लक्षणमाह ॥ **प्रवृत्तीति** । प्रवृत्तिहेतोर्बाहुल्यमिन्द्रादिशब्दप्रवृत्तिहेतोरैश्वर्यादिगुणजातस्य सामस्त्यात्स्वातन्त्र्यं च । घटादिशब्दानां कुम्भादिषु प्रयोगमात्रबाहुल्याद्रूढिः। सा मुख्या प्रवृत्तिरित्युक्ता। सिंहपदप्रयुक्तस्य केसारिणः क्रौर्यादिसादृश्यात्सिंहो देवदत्त इत्यादिप्रवृत्तिर्गौणी। पुरुषाणां मञ्चादिप्रयोग उक्तसम्बन्धान्मञ्चाः क्रोशन्तीत्यादिरूपा लक्षणा। आसां वृत्तीनां मध्ये पूर्वस्थाः श्रुतिलिङ्गविरोधादयो न । एवं परवृत्तेर्ग्रहणमित्याह ॥ **पूर्वेति** । विष्णौ मुख्यप्रयोगरूढप्रमाणभूतां श्रुतिमुपलक्षयति । तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षते । एतं सन्तं स

इदं मध्यतो दधे य इदं किञ्च तस्मान्मध्यमास्तस्मान्मध्यमा इत्याचक्षते । एतं सन्तमिति तथा सन्तं च शतर्च्यादिकं सन्तमित्यत्र श्रुतौ ह्येतमेव सन्तमित्येव शब्दोऽवधारणार्थम् । मधुच्छन्दादिर्ष्यादिषु शतर्च्यादिशब्दानां रूढेर्भगवति शतवर्षोऽध्ययनादिगुणयोगस्य प्राबल्यं सनिरुक्तिकं दर्शयति । तत्रर्गां विद्वद्रूढिं चापेक्षत इति दर्शयति । पुनरपि वाक्यान्तरैर्विष्णोः सर्वशब्दवाच्यत्वं द्रढयति ॥ **अ इति ब्रह्मेति ।** तत्रागतमहमिति श्रुतावकारेण ब्रह्म कथितम् । अकारो वै सर्वा वागिति सर्वेषां शब्दानामप्यकाख्याख्यानात्मकता च कथिता । एवमकारार्थब्रह्मविषयत्वं सर्वशब्दानामुक्तं स्यात् । यद्वा ओमिति यच्च नेति यच्चास्याः क्रूरं यदि चोल्बणिष्णु तद्वियूय कवयोऽन्वविन्दन् नामायत्ता ये ता समतृप्यन्त ऋतेऽधि इति नामवित्कृतकृत्यता च कथिता । यद्वाचो ओमिति विधिपदं यच्च निषेधपदं यच्चार्थक्रूरं यदेव च श्रवणोल्बणं तत्समस्तमपि भगवद्विषयतया विविच्य तत्तन्नामायत्तानि गुणजातान्यन्वविन्दन् । अधिश्रुते परिपक्वे समतृप्यन् कृतकृत्या अभवन्नित्यर्थः। तस्य वा एतस्य संहिता । षकारो वै बलं णकारः प्राण आत्मेत्यागमः संहिताशब्दवाच्यविष्णोर्नेत्याक्रियमाणं चेष्टकत्वमात्रमातत्वगुणं च वदन् । स यो ह तौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदेति तद्गणज्ञानपूर्वकत्वेन संहिताध्ययनं च वदन्संहितापदादेर्विष्णुनामार्थरूपत्वमब्रवीत् । कथं षकारणकारयोरेव विष्णुपरत्वमित्यत आह ॥ **उपसर्गेत्वत इति** । उक्तार्थं पुनरपि प्रमाणान्तैर्रर्द्रढयति ॥ **घोषा इति** । पदवर्णस्वरादिसमन्वये प्रमाणान्युपक्षिपति ॥ **घोषा इति** । ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् । सर्वे वेदा यत्पदमामनन्ति । इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः । यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्त्वमोजास्तस्मै त्वा तेभ्यस्त्वा स प्रथमः । सङ्कृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणोऽग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि । यो देवानां नामधा एक एवेति ।

समुद्रं न सिन्धव उक्थशुष्मां उरुच्यवसङ्गिर आमनन्तीत्यादिशब्दा द्रष्टव्याः॥ २ ॥ **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** इति सूत्रे भगवता स्वयं तदेवोक्तम् । एवं भगवति सर्वशब्दानां समन्वयमभिधा**यानुमानिकामि**त्यादिसूत्राणां परोत्प्रेक्षितामन्यथायोजनां निरस्यति । नेत्यादिवाक्य-रूपेण प्रमाणेन सङ्ग्रहात् । यत्र वाक्ये प्रधानादन्योऽर्थो नेष्यते । नन्वजामेकामित्यादेस्तेजोऽबन्नात्मकं भूतसूक्ष्मं किञ्चिदुपादानमिष्यते न प्रधानमिष्यत इत्यत आह ॥ **अजेति** । अजामेकामिति श्रुतिरपि यथैतामेव प्रकृतिमाह । तर्हि को दोषः । यदि सर्वथा तत्रोच्यमानं पारिणामि जडमस्ति । शब्दमात्रविप्रतिपत्तेरकिञ्चित्करत्वात् । एवं चेद्युष्माकमपि भगवति समन्वयप्रतिज्ञाहानिरित्यत आह ॥ **अस्माकमिति** । सर्वेषामपि शब्दानां परममुख्यार्थो भगवानेव । सकृदुच्चारितशब्दानामप्यर्थद्वयं सम्प्रतिपादयति ॥ **अर्थद्वयमिति** । योगानां शब्दप्रवृत्तिहेतूनां गुणयोगानामसिद्धा-श्रयमनुभवतोऽपि सिद्धोऽयमर्थ इत्याह ॥ **बुद्धाविति** । यथा पङ्कजशब्दस्य योगवृत्तिः शैवलादौ रूढिप्रवृत्तिः पद्म इत्युभयोरपि बुद्धौ समारोहः। उभयोरर्थयो-र्युगपद्बुद्धिसमारोहस्य प्रायः प्रतिपादनं विनाऽनुपलम्भात् । पूर्वारोहेणैव व्यवहारनिर्वाहाच्च । किमित्युभयार्थकल्पनमित्यत आह ॥ **विपरीतेति** । कुम्भेनोदकमाहरेत्यादौ विपरीतप्रमाणाभावात्पूर्वारोहो व्यवहारकारणं स्यात् । नमोऽर्चिष्मानर्चितः कुम्भ इत्यत्र स व्यर्थः । अत इत्यादेरयमर्थः । अतः सर्वश्रुतीनां महायोगवृत्त्या विष्ण्वभिधायित्वेऽपि क्वचिद्रूढ्या प्रधानस्यापि प्रतीयमानत्वादजादिशब्दैर्बाधकप्रमाणाभावादजामेकामित्युक्ता श्रुतिः प्रधानं प्रतिपादयतीति युक्तं सदसदात्मकं स्थूलसूक्ष्मरूपविशेषं स्वयमन्नस्य न विकारो भवति । पञ्चभिर्भूतैः पञ्चतन्मात्रैश्च चतुर्भिर्मनोबुद्ध्यहङ्कारचित्तैर्दशभि-रिन्द्रियैर्विकारभूतैर्ब्रह्म बृंहितमिति सन्न्यायरत्नावल्यां स्वयं प्रभुः सूत्रकार एवानुवदति ॥ १ ॥ ननु **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि**त्यत्र प्रकृतिशब्देन ब्रह्मोपादानत्वेनोच्यते । येनाश्रुतं श्रुतं भवतीति प्रतिज्ञाया यथा सोम्यैकेन मृत्पिण्डेनेत्यादिदृष्टान्तस्यानुकूल्यादित्यत आह ॥ **न चेति** । अविकारः सदा सृष्टिकालेऽपि सदात्मा स्वामी मुक्तानामपि सौम्य । औपम्यमुपमापदं तन्न भवतीत्यनौपम्यम् । एकरसं प्रधानरसम् । विकारभेदमाह

॥ **पराधीनेति** । विशेषाप्तिर्द्विविधा । तत्राद्या परिणाममन्तरेणैव विशेषप्राप्तिरूपा । यथा चतनानां देहाभिमानादि । यथा हिरण्यादीनां कुण्डलादिभावः । अनिवृत्त्याऽन्यथाभावस्त्विति परिणामरूपभावविकारः । यथा क्षीरस्य दधिभावः । अनिवृत्त्याऽन्यथाभावस्य पराधीनविशेषावाप्तिरूपत्वे सत्यपि कुरुपाण्डवन्यायेन भेदोक्तिः सम्भवति । विष्णोर्जगज्जनकत्वात्कथं पितृवदुपादानत्वं निषिध्यत इत्याशङ्क्य तदपादानत्वमेवेत्यभिप्रायेणाह ॥ **अपादानत्वमिति** । तदेवोपपादयति ॥ **न चेति** । तदन्नं हि कार्यरूपतया भवेत् । तद्भुक्तान्नं हि कार्यरूपेण जायते । बुद्धिपूर्वकं विश्वकर्तृकत्वं नाम निमित्तकारणत्वम् । तदप्यपादानतया स्वदेहान्निर्यापणेन रजोगुणात्मकं कारणद्वारेण विलीनं भुक्तपूर्वं विश्वं स्वदेहात्परिणाम्य ससर्जेति ब्रह्मतर्कवाक्यार्थः । चेतनाचेतनयोरन्यत्वात्परस्परविकारत्वं न सम्भवतीत्यत आह ॥ **न चेतनेति** । कार्यस्य विकृतत्वात्कारणत्वादन्यत्वं दृश्यते । यथा क्षीराद्दध्नः । न हि क्षीरदध्नोरैक्यम् । माधुर्यादिवैलक्षण्यदर्शनादित्यत आह ॥ **न चेति** । विकारिक्षीराद्विकृतस्य दध्नस्तदतिरिक्तत्वं दृश्यते । यत्प्राक् क्षीरं तदेव पश्चाद्दधीत्यैक्योपलम्भात् । सर्वज्ञत्वान्यत्वाल्पज्ञत्वजडत्वादि । न हि सद्रूपब्रह्मकार्यस्य जगतः सद्गमनं सती पृथिवी सत्या आप इति सद्भावानुरक्तबुद्धिवेद्यत्वदर्शनात्कथमित्याशङ्कापरिहारायातिप्रसङ्गमाह ॥ **भेद इति** । ननु क्षीरवद्ब्रह्म साकल्येन न परिणमते भागेनैवातो नोक्तदोष इत्यत आह ॥ **भागेनेति** । परिणाम्यमानापरिणाम्यमानभागयोर्भेद एव हि । अन्यथा साकल्येन परिणामप्रसङ्गात् । प्रधानमित्येवशब्दार्थः । भिन्नानां भागानां समुदायस्य ब्रह्मेत्युक्तिर्भवेच्चेत्तदा विश्वस्य ब्रह्मोपादानता न स्यात् । भिन्नानां समुदायस्य ब्रह्मेत्युक्तिर्भवेन्न त्वेकैकस्येति चेत्तदा विश्वस्य ब्रह्मोपादनता न स्यात् । एकैकभागस्य ब्रह्मतोक्तिमात्रस्याब्रह्मत्वात् । ननु ब्रह्म जगतोऽनन्यत्वेऽपि प्रकृतिविकारः सम्भवति । यथा शृङ्गान्तरं शरादेरित्यत आह ॥ **शृङ्गादिति** । एवमाद्येषु शृङ्गेषु कारणेषु शरादीनामपादनत्वमिष्यते न तूपादानत्वम् । अत्र शृङ्गादिषूपादानभूतमेकदेशमन्तरेण देशान्तरगतापादानता ब्रह्मणो जगदुपादानतायां दृष्टान्तो भवेत् । तस्यैकदेशस्योपादानत्वं न ब्रह्मावनुगृही-

तस्य प्रधानस्य जगदुपादानत्वे दृष्टान्तः स्यात् । अत्र शृङ्गैकदेशत्वेऽप्युपादानत्वमेव । न हि कुतः शृङ्गैकदेशोत्पत्तावयवादप्यवयविमृदाद्युपात्तबाह्यावयवानां गौरवादपादानत्वमेव । शराद्यात्मकस्याचेतनस्याचेतनाच्छृङ्गैकदेशादपि तदुपादनतयोद्भवोऽस्तीत्याह ॥ **न चेति** । किं तर्हि तदचेतनं चेत्तदन्योत्पत्तावनुग्राहकमिति चोद्याभिप्रायः । एवमुक्तभङ्ग्याऽनयोः प्रकृतिविकारभावो नास्तीति । ननु स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिश्रुतौ सत्यादिशब्दवाच्यं कार्यकारणभावेन ब्रह्मणो विश्वमुच्यत इत्यत आह ॥ **सच्चेति** । अस्य जीवस्य प्रवेशात्पूर्वमेव सिद्धितं सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवदिति श्रुतेर्गतिमाह ॥ **सत्त्वादिति** । सत्त्वान्निर्दोषत्वाद्वैदिकत्वात्स्वाश्रयत्वान्निलयनान्तररहितत्वेन नित्यत्वात्सत्यं सदातनामिति वक्ष्यति च । स्वगुणव्याप्तियन्तृरूपतत्वश्च सत्यम् । एवं सति नित्यगुणे भगवति सच्च त्यच्चाभवदिति विश्वप्रवेशानन्तरं गुणवद्भावकथनं कथमित्यत आह ॥ **व्यक्तिरिति** । तदुपदेष्टृभिः श्रोतृबुद्ध्यपेक्षया व्यक्तिर्भवेद्धि । तस्मादित्यादेरयमर्थः । अशेषकर्तृत्वात्प्रकृतिशब्दवाच्यो भगवानेव । प्रकर्षेण करोतीति प्रकृतिः ॥ **इत्यादेरिति** । प्रकृतिश्चेति चशब्दार्थः । सोऽकामयत बहु स्यां प्रजायेयेत्युक्तो बहुभावस्तस्यैव युज्यते हि । तदर्थं बहुरूपग्रहणार्थम् । एवं परिणामवादं निरस्य विवर्तवादमपाकरोति ॥ **यच्चेति** । मृषा विषयाभावेन । न हि भ्रान्तिर्दृष्टया दृश्यत इति यत्स सर्गस्ततोऽन्यता स्वत एव भेदः प्राप्तः । अभेदयोगिनः क्वाप्येवंविधा दृष्टिरदृष्टा हि । तस्माद्देहकारणं कामादिकमपि स्वतोऽङ्गीकर्तव्यम् । न भ्रान्तिकल्पितमित्यायातम् । ननु स्वतोऽन्यता भ्रमादेवेत्यत आह ॥ **भेदोऽपीति** । तस्माज्ज्ञानस्य भ्रमजभेदापेक्षया भ्रमजभेदस्याज्ञानव्यपेक्षयाऽन्योन्याश्रयता । भ्रमजभेदासिद्धेर्नाज्ञानकल्पकं किञ्चित्स्यात् । भ्रमकल्पितत्वेन बाध्यत्वात् । अतः सर्वस्याभ्रमकल्पितत्वम् । तेनैव प्रतिज्ञातमित्यायातम् । नन्वस्य भ्रमकल्पितत्वेऽपि व्यवहारनिर्वाहकत्वान्न शुक्तिरजतवद्बाध्यत्वम् । सत्यताऽङ्गी-

कारदित्यत आह ॥ **व्यावहारिकेति** । अर्थक्रियादिव्यवहारनिर्वाहकं व्यावहारिकम् । न हि बाध्यं शुक्तिरजतादिकमर्थक्रियाकारि क्वापि दृष्टम् । अत्रेदमाकूतम् । विमतमबाध्यं व्यावहारिकत्वात् । यन्नैवं तन्नैवं यथा शुक्तिरजतमिति । अर्थक्रियाकारि स्वप्नादिकं बाध्यं दृष्टमित्यत आह ॥ **न चेति** । स्वप्नोऽपि नः पक्षे नैव मिथ्या । तस्मादबाध्यत्वात्तस्यार्थक्रियाकारित्वमिति विशेषः । सन्ध्यं तृतीयं स्वप्नस्थानमित्यारभ्य न तत्र वेशान्ताः पुष्कारिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्कारिण्यः स्रवन्त्यः सृजते । स हि कर्तेति श्रुतिवाक्यम् । अस्याः स्वप्नावस्थाया जाग्रदवस्थात्वमिति प्रतीतिर्हि भ्रमः । ननु प्रबोधानन्तरं नात्र वित्तकलत्रादिकमासीदिति बाधानुभवात्कथमभ्रमत्वमित्यत आह ॥ **जाग्रत्त्वमिति** । स्वप्नपदार्थानां जाग्रत्पदार्थत्वमस्तीति प्रतीतिर्हि भ्रमः । नेदं जागरितवित्तादिकं स्वाप्नमेवेति हि बाधश्च । रज्जुसर्पादेर्भयादिजनकत्वाच्च कथं नार्थक्रियाकारित्वमित्यत आह ॥ **सर्पेति** । तादृशं सर्पविषयम् । तत्तस्मात् । ननु सतोऽपि क्रियाकारित्वं न सम्प्रतिपन्नम् । घटादेः सत्यत्वस्यासम्प्रतिपन्नत्वादित्यत आह ॥ **ब्रह्मेति** । परत उपाधितः । ब्रह्मसृष्ट्यादेरौपाधिकत्वादुपाध्यपगमान्न ब्रह्मणोऽर्थक्रियाकारित्वमित्यत आह ॥ **परतस्त्वेति** । अविकारस्य ब्रह्मणः सृष्ट्याद्यन्यथाऽनुपपत्तिस्तर्कः परतस्त्व एव प्रमाणमित्यत आह ॥ **अमुख्येति** । ननु ब्रह्मणः सृष्ट्याद्यर्थक्रियासृज्यादिकं वा साक्षिणा सिद्धिर्वा किञ्चिदपि नाङ्गीकुर्मः । सर्वस्यातात्त्विकत्वादित्यत आह ॥ **यदीति** । विश्वस्य तात्त्विकत्वे प्रमाणमाह । विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वां । हे इन्द्र ब्रह्मणस्पती युवो सृज्यमिदं विश्वं सत्यमेव । मघवाना कीर्तिमन्तौ आपश्च न वां प्रमिमन्ति । अब्देवता अपि युवयोः सत्यसृष्टिव्रतं जानन्ति यच्चिकेत तत्सत्यमित्तन्न मोघं वसुस्यार्हमुत जेतोतदाता । सुपर्णो भगवान् यच्चिकेत तत्सत्यमेव न मिथ्या । प्रधान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचम् । अस्य महतः सत्यस्य करणानि कर्माणि प्रब्रुयां ह्यतः । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः । कविर्मानी । मनीषी ज्ञानी ।

स्वयम्भूरनादिकालमारभ्य पदार्थान्यथार्थत्वेन चकार । अथ हैनमाहुःसत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजत इत्यादिकमादिशब्दार्थः । विश्वसत्यत्वं साक्षिणाऽपि सिद्ध्यतीत्याह ॥ **सत्यत्वमिति** । गगनादेः प्रदेशादेर्विश्वस्य प्रदेशस्वरूपग्रहणान्यथाऽनुपपत्त्या साक्षिस्वरूपं सिध्यतीत्यभिप्रायेण गगनपदमुपनिबबन्ध । गगनमप्यव्याकृताकाशः । आदिशब्दात्सुखदुःखादिकं । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वात्कथमबाध्यत्वं निश्चीयत इत्यत आह ॥ **सर्वेति** । जगत्सत्यत्वग्राहकस्य प्रत्यक्षादेः प्रामाण्यग्राहकेण साक्षिणैव जगतः सर्वकालेष्वबाध्यत्वं प्रतीयते । सुषुप्तौ सर्वेन्द्रियोपरमात्प्रत्यक्षादिप्रवृत्त्यभावे च कालस्य प्रतीतिरिति इयन्तं कालं सुखमहमस्वाप्समिति परामर्शात्सुषुप्तौ कालानुभवोऽस्तीति गम्यते । ननु श्वश्चरिष्यामीत्युत्तरकालग्रहणवदेवायं परामर्शो नानुभूतविषयः किन्त्वनुमानरूपः । विमतः कालान्तरवान्कालत्वात्सम्प्रतिपन्नकालवदिति । अत्रोच्यते । अतीतेति किमयं पक्षीक्रियमाणः कालः सामान्यरूप आहोस्विद्विशिष्टरूपः । सामान्यरूपश्चेत्पूर्वोत्तरकालयोरपि पक्षान्तरभूतत्वात्साध्यधर्मान्तर्भा॰ वात्तद्विशिष्टस्य धर्मिणो ब्रह्मण एव पक्षत्वात्पक्षीकर्तुमशक्यत्वात् । वर्तमानाख्यो विशिष्टरूपः कालः पक्षीक्रियत इति चेत् । वर्तमानशब्देन किं व्यवच्छेद्यम् । अतीतानागतकालाविति चेत् । तयोर्व्यवच्छेद्यत्वेनानुमितेः प्रागेव ज्ञातत्वात्पक्षीकर्तुमशक्यत्वम् । न च यौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययः कालानुमाने लिङ्गम् । अनुमेयस्यैव कालस्य तत्र विशेषतः प्रतीतेः साध्याभावात्पक्षीकर्तुमशक्यत्वम् । तदिति तत्कालविशिष्टत्वेन स्मृतिगोचरं किं तदिति भूतभविष्यत्कालविशिष्टत्वेन मानान्तरं दृश्यं वा । एतदिति वर्तमानकालविशिष्टत्वेन दृश्यम् । तं विना साक्षिसिद्धकालं विना किञ्चिद्भूतं भविष्यद्वर्तमानं वस्तु द्रष्टुं स्मर्तुं वा न शक्यम् । एवं साध्यसाधनयोर्भूतभविष्यद्वर्तमानाविनाभावश्च स्मर्तुं द्रष्टुं वा न शक्यते । एव कालस्याविनाभावग्रहणात्प्रागपि नित्यसिद्धेर्न कालं विनाभावमूलाया अनुमाया अवसरो भवेत् । अत इत्यादेरयमर्थः । अतोऽनुमानावसराभावात्कालस्य साक्षिसिद्धत्वाद्गगनादेः कालखचितत्वेनैव दर्शनात्त्रिकालग्राहिणा साक्षिणैवादोषप्रमाणप्रतीतस्य गगनादेः शाश्वतिकबाधाभावलक्षणं सत्यत्वं मतम् । न तु

सदोषप्रमाणप्रतीतस्य शुक्तिरजतादेः । ननु रजतादेः सत्त्वं प्रत्यक्षतो गृहीत्वाऽपि कुत्रचिदाकाङ्क्षायां निष्पादितपरीक्षयैव सत्यत्वं निश्चिनोति । अतः कथं साक्षिसिद्धं सत्यत्वमित्यत आह ॥ **परीक्षादेरिति** । निष्पादितानुमानादिकं परीक्षाप्रमाणम् । आदिशब्दादन्यप्रमाणानि । सत्यत्वं सत्यविषयत्वम् । अन्यथा परीक्षादिप्रमाणानां सत्यत्वमविषयत्वलक्षणं प्रमाणम् । प्रामाण्यं साक्षी न गृह्णातीत्यभ्युपगमेऽकस्माज्ज्ञानमन्तरेण विश्वस्यात्मादेरितःपूर्वं तथाभावात् । यद्युपरिनिवृत्तिर्न शङ्क्यते तर्हि संसृतेः सत्यत्वविषयत्वम् । अन्यथा परीक्षादिप्रमाणानां गतिरपि नो भविष्यति । ब्रह्मविदाप्नोति परमिति वाक्यम् । विमतं दुःखादिकं ज्ञाननिवर्त्यमज्ञानकार्यत्वात् रज्जुसर्पव्यसनवदित्यप्यनुमा । आदिशब्दान्महतां संसारबन्धो निवर्त्यो भवितुमर्हति बन्धत्वाच्छृङ्खलादिबन्धवदित्यनुमा । आदिशब्दाद्योगिप्रत्यक्षम् । तस्य वाक्यादेः प्रामाण्यं च साक्षिप्रमाणवदेवाङ्गीकर्तव्यम् । एवमक्षजमानत्वसिद्धामेवं साक्षिसिद्धेनाक्षजमानेन सिद्धाम् । मृषा प्रमाणं विना । बहुज्ञानकृतं बहूनां ब्रह्मादीनां ज्ञानेन सृष्टम् । स्वात्मतस्करः स्वानुभवापलापकः । परस्य सत्यतां जानन्नपि यो जनान्तरं स्वात्मानं च वञ्चयति । परस्य सत्यतामनुवदन्नपि स्वात्मानं चोरयति । स परो नास्तीति परसत्यतां नानुभवतीति चेत् । किमित्युन्मत्तवद्वदेत् । परस्य श्रोतुरभावादेव यदि नैवोच्यते यदि वागपि नैवोच्यत इति ब्रूयात् । प्रपञ्चो यदि विद्येत । विकल्पो विनिवर्तेत । वाचारम्भणं विकार इति श्रुतिर्विश्वनिवृत्तत्वे प्रमाणमित्याशङ्क्य तावदनूद्य तस्यार्थमभिधत्ते । अत्रेत्यादेरयमर्थः । एतयोर्माण्डूक्यश्लोकयोरेते शब्दा उत्पत्तिपरिकल्पनेति प्रसङ्गमुखेन निषिध्य विश्वसत्यतामवगमयन्ति । निवृत्तिर्व्याप्तिर्विनाशिव्याप्तिः । प्रध्वंसाभावस्योत्पत्तिमतोऽपि विनाशाभावात्प्रायःशब्दः । जीवेश्वरश्रुत्यैतां व्याख्याति ॥ **मितं त्रातमित्यादिना** । स्ववाक्येन मायामात्रमित्यादि व्याख्याति । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतिं विश्वमिथ्यात्वविषयत्वेनाशङ्क्यमानां व्याख्याति ॥ **वाचारम्भमित्यादिना** । आरम्भणमात्रमिति व्याख्याति विकारो विकृतमिति । विकृतं वहतीति विशब्देन कृतत्वात् । अत

एवास्थिरत्वादप्रधानमित्यर्थः । प्रधानं साङ्केतिकं वैदिकनाम्ना । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं कथन्नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् । यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम् । एवं सोम्य स आदेशो भवतीति छन्दोगश्रुतिः । अत एकस्य ब्रह्मणो विज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्प्रतिपादनार्थं मृत्पिण्डादिदृष्टान्तानुदाहृत्य तत्कार्यस्य मिथ्यात्वमभिधाय कारणस्यैव सत्यत्वमाचष्ट इत्याशङ्कां परिहरति ॥ **वाचारब्धमिति ।** आरम्भणमारब्धमिति व्याख्याति विकारो विकृतमिति । धर्मधर्म्यैक्यात् । विकृतं बह्विति विविधत्वेन कृतत्वात् । अत एवास्थिरत्वादप्रधानमित्यर्थः । प्राधान्यं साङ्केतिकात् । वैदिकनाम्नाः सत्यशब्देन मिथ्यात्वं न व्यवच्छिद्यते किन्त्वनित्यमेवेत्याह ॥ **सदातनमिति ।** सततं यातनं हि सत्यम् । उत्तरत्र दहरविद्यायां यदैवैनं जरावाप्नोति प्रध्वंसते वा किं ततोऽस्यातिशिष्यत इति । सब्रूयान्नास्य जरयैतज्जीर्यते । न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमित्युत्तरत्र दहरविद्यायां नित्य एव हि सत्यशब्दप्रयोगः । परयोजनायां दूषणमाह ॥ **वाचेति ।** अत एवमुक्तवर्त्मना सादृश्य एव मृत्पिण्डादिदृष्टान्तानां विवक्षा । वाचारम्भणदृष्टान्तस्य तु नित्यत्वे प्राधान्ये च । प्राधान्यमतस्तत्तेजोऽसृजतेत्युपक्रमादुपक्रमेऽपि प्राधान्यमेव हि प्रतिपादयिषितम् । तस्मादत्रापि तत्सम्भवतीत्यभिप्रायेणाह ॥ **प्राधान्येति ।** पितृवदपादानत्वेन प्रकृतिभावेनापि भ्रमाधिष्ठानत्वेनोक्तसमन्वयसिद्धाः प्रत्येकमपि पूर्णज्ञानानन्दादयोऽनन्तगुणा एवात्माऽस्येति भगवान्पूर्णगुणाशेषगुणात्मकः ॥ * ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां नयचन्द्रिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥ प्रथमाध्यायः समाप्तः ॥ १ ॥ * ॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ पूर्वाध्यायेऽनुमानस्वरूपमाह ॥ **अनुमेति** । साध्येन साधनस्याविनाभावो व्याप्तिः । कथमत्र व्याप्तिमात्रमनुमानमित्यत आह ॥ **प्रतिज्ञेति** । विजानतः पश्यतः । अर्थं प्रतिज्ञाय यो धूमवान्सोऽग्निमानित्युक्ते धूमवतः पक्षस्याग्निमत्त्वं ज्ञायते हि । लिङ्गवचनमपि स्मारकमात्रत्वेनोपयोगि स्यादिति चेल्लिङ्गादिति चेत् । लिङ्गस्याप्रसिद्धत्वे तत्स्मृतं नात्र प्रयोजनं स्यात् । ननु पञ्चावयवोक्तावेव विवादावसितिर्भवेन्न व्याप्तिमात्रोक्तावपीत्यत आह ॥ **पश्चेति** । एवमुक्तेऽपि दृष्टान्ते हेतौ वा विप्रतिपत्तौ सहजातायां पुनरपि हेत्वन्तरेण पुनरपि साधनः स्यादेव हि । कुतः पर्वतस्याग्निमत्त्वमिति प्रश्नेन प्रतिज्ञायाः सिद्धत्वे धूमवत्त्वादिति लिङ्गोक्तौ चशब्दादुपनयाद्युक्तौ चानुमानदोषानाह ॥ **विरोध इति** । असङ्गतिलक्षणमाह ॥ **प्रतिज्ञायामिति** । यथा कथयां जगन्मिथ्यात्वं साधयामीति प्रतिज्ञाय पर्वतोऽग्निमान्धूमवत्त्वादिति । विरोधे भेदानाह ॥ **विरोधोऽपीति** । प्रतिज्ञातार्थविरुद्धता प्रमाणान्तरैः । यथाऽग्निरनुष्ण इत्यादिलिङ्गराहित्यम् । यथा शब्दो नित्यश्चाक्षुत्वादित्याद्यव्याप्तिशब्देनातिव्याप्तिरुच्यते । तस्याश्च विवक्षितव्याप्तेरितरत्वात् । अनित्यः शब्दः प्रमेयत्वादिति श्रावणत्वादित्यतिव्याप्तिः । एवमनुमानस्याधिक्यदूषणे उक्तावचनप्राप्ते आह ॥ **न्यूनेति** । यथा पर्वतो धूमवत्त्वादिति न्यूनम् । गगनवदिमान्नगोऽग्निमानित्याधिक्यम् । उपाधिविरोधस्याव्याप्तावन्तर्भावमाह ॥ **साध्येति** । साध्यव्यापकेनोपाधिना बैलेक्ष्यं विरोधश्च साधनस्याव्याप्तिः । साध्यं व्याप्नोतीति साध्यव्यापकः । साध्यव्यापकत्वे सति साधनाव्यापको ह्युपाधिः । यथा विमतं लोहभेद्यं पार्थिवत्वात्कदलीकाण्डवदित्यत्र शिथिलावयवारब्धत्वं प्रयोजनमिति । न मेयं मानापेक्षेत्यादि स्वस्य वाक्यविरोधोऽपि जात्यपरपर्यायप्रतिज्ञाविरोधेऽन्तर्भूतः । निरीश्वरवादमभ्युपगतवतः कस्यचिदर्थस्यानुपपत्तौ परेणोद्भावितायां सत्यामीश्वरशक्त्या युतं स्यादिति स्वानां वाक्यविरोधोऽपसिद्धान्तापरपर्यायोऽप्येवमेव । परेण स्वानभीष्टे साधिते स्यादेवं तथाऽस्तीति संवादः । तूष्णींभावोऽननुक्तिः । प्रतिज्ञाहान्यादीनां परपरिकल्पितानां द्वाविंशतिनिग्रहस्थानानामेतेषु षट्स्वेवान्तर्भावमभिप्रेत्याह ॥ **एत एव तु निग्रहा**

**इति** । एवं प्रमाणानि विचार्य तदुपयोगि स्थानं कथां विशेषतो लक्षयति ॥ **वाद इति** । असतां सतां वेदबाह्यानां वेदवादिनां च परस्परं तु वादो वितण्डा वा स्यादसतां पक्षदूषणरूपम् । जल्पादौ पुनरुक्त्यादिना विजयपराजयप्राप्तौ न हि जल्पादिना क्वचिदुच्चनीचत्वज्ञानम् । तस्माद्वाद-रूपविद्यापरीक्षणं कार्यम् । वादे तु पुनरुक्त्यादीनामनुद्भाव्यत्वाद्धेत्वाभासादीनामुद्भाव्यत्वाच्च तेनोच्चनीचत्वज्ञानं भवति । तत्सिद्धौ व्यर्थताऽन्ययोस्त-त्रैव जयपराजयसिद्धौ वितण्डाजल्पयोर्व्यर्थता । उभाभ्यामपि साधनमात्रे वा कृते समत्वेन जयपराजयसिद्धौ जल्पवितण्डयोरवकाशो नैव । वादेऽपि कारणमुच्चनीचत्वज्ञानस्येति शेषः । विजिगीषूणां वादस्य विशेषमाह ॥ **सभेति** । ननु वादेनैव जयलाभादिसिद्धौ किं जल्पादिनेत्यत आह ॥ **तत्त्वेति** । विद्याया वेदवेदाङ्गरूपायाः । अत्र साधनप्रकारमाह ॥ **प्रतिज्ञेति** । यथा कत्येव देवा याज्ञवल्क्येति शाकल्येन पृष्टो याज्ञवल्क्यस्त्रयस्त्रिंशदिति प्रतिजज्ञे । परमोमिति होवाचेति शाकल्यस्य संवादात्तथाऽत्रापि प्रतिज्ञामात्रेणास्य साध्यत्वम् । सभादीनां लक्षणमाह ॥ **सभेति** । सभ्याः सभायां साधवः सर्ववेदिनश्च स्युः । न सभादिवदुक्तलक्षणमात्रवन्तः प्राश्निकाश्चैवमेव । एतदज्ञाने एतेषां प्राश्निकानां वादिप्रतिवादिव्यवहारगुणदोषाज्ञाने सभ्याश्च निर्णयाय प्रमाणं स्युः । एतेषां चाज्ञाने दूरगा विद्वांसः । वादजल्पौ वितण्डाया विवेचयति ॥ **उभाभ्यामिति** । स्वपक्षस्य साधनं परपक्षदूषणम् । प्रत्यक्षेत्यादेरयमर्थः । वादिना प्रयुक्ते आगमे प्रत्यक्षविरोधमागमान्तरविरोधं वा तद्विव-क्षितार्थस्योद्भाव्यान्यार्थतैव दर्शनीया । प्रतिवादिनाऽत्र विवक्षितार्थे उपक्रमादिलिङ्गविरोधता च प्रदर्शनीया । अत्र कथायां प्रयुज्यमानायाः श्रुत्याद्यनु-गृहीताया अनुमायाः पराभिमतमवयवानियममनूद्य दूषयति ॥ **पञ्चेति** । कश्चिदनुमां प्रतिज्ञाहेतूदाहरणाख्यत्र्यवयविनीं नियमाद्ब्रवीति । अन्यः प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यपञ्चावयवम् । अपरस्तु दृष्टान्तोपनयाख्ययुग्मावयविनीम् । तादृशी नियतावयवा केन साध्याऽवयवकल्पना । नियतावयवेन चेत् । तदवयवनियमकल्पनार्थमन्यनियतावयवकल्पनमित्यनवस्था । एवं नियतावयवासिद्धौ न केनचिद्व्याप्तिमात्रेण नियमसाधनं

कर्तव्यमेव स्यात् तेन वादिना । तस्मात्सा व्याप्तिरेवानुमा मता । अनुभूतिः प्रमाणमिति परोक्तप्रमाणलक्षणं स्मृतिप्रामाण्याङ्गीकारादेवऽव्याप्तिरभिहितेत्यभिप्रायेणाह ॥ **अनुभूतिरिति** । केन निमित्तेनानुभूतावन्तर्भूता स्मृतिरपोद्यते । इतोऽपि स्मृतिः प्रमाणमित्याह ॥ **पूर्वेति** । न च स्मृतिलिङ्गकं पूर्वानुभूतज्ञानमिति वाच्यम् । तत्र धर्मिग्राहकप्रमाणाभावात् । स्मृतेः स्वरूपमाह ॥ **मानसमिति** । इदं मानसप्रत्यक्षं चेत्कथं देशकालप्रकृष्टार्थग्राहकम् । न हि चक्षुरादिप्रत्यक्षस्य तथात्वमित्यत आह ॥ **अतीतेति** । स्मृतेः क्रियाविषयत्वं च साक्षिसिद्धमित्याह ॥ **विज्ञातमिति** । पूर्वं मयैतत्कृतमित्यपि मनसा विज्ञातम् । उक्तार्थमुपसंहरति ॥ **एवमिति** ॥ २ ॥ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या**मित्यधिकरणाभिप्रायमाह ॥ **तथापीति** । मृदब्रवीत् ता आप ऐक्षन्त । बहुस्यां प्रजायेयेति । ता अन्नमसृजन्तेति बुद्धिवागादिवाचको वेदो यज्जडं तद्वागादिरहितमिति द्रष्टृप्रत्यक्षसिद्धव्याप्तिः । लोके मृदादिशब्दानां मृदादिमात्र एव रूढिर्न तु देवतास्वित्यत आह ॥ **वाचेति** ॥ **बालेति** । अनुपलभ्यमानत्वात्तासामभाव इत्यत आह ॥ **दृश्यन्त इति** । शास्त्रोक्तवस्तुनः शास्त्रोक्तलक्षणानुकूल्येनैव व्युत्पत्तिः शास्त्रस्यैव तत्रोपजीव्यत्वात् । तस्या अनादित्वेन बलवत्त्वाच्चेदृशो न्यायः श्रुतेरर्थान्तरकल्पना ॥ ३ ॥ **असदिति चेन्न प्रतिषेधमात्रत्वा**दित्यादिविवृण्वन् श्रुतिगुणयुक्तिविरोधं परिहरति ॥ **अल्पेति** । असत्कारणं श्रुत्यर्थो भवति । क्वाप्यसत्कारणत्वेनासतः सदजायतेत्यादिश्रुत्यर्थो न भवति हि किन्तु ब्रह्मैव । तद्धा एतदसदाहुर्न ह्यासादयति कश्चनेत्यादेः । ननु युक्तिसहितश्रुतिविरोधश्चतुर्थपादे परिह्रियते हि । तस्मात्कथमपुनरुक्तिरित्यत आह ॥ **श्रुतिप्रायेति** । श्रुतिप्रायाः श्रुतिप्रचुराः स्वयमल्पाश्च । सूत्रव्याख्यानरूपेण पूर्वपक्षयुक्तिमुक्त्वा परिहरति ॥ **असादिति** । प्रलये तावत्सर्वस्यासत्त्वं कल्प्यते तस्मादसतः किञ्चित्प्रधानादिकं जगत्कारणादिकमुच्यते च । यथा मृदो घटः कृतककारणमपि प्रलये सद्भवितुमर्हति । अयं च प्रयोगः । विमतं कारणं देशान्तरे कालान्तरे वा सद्वस्तुत्वाद्यथाकार्यं घटादिकमिति । बुद्धिपूर्वं

प्रवृत्तिर्हि कर्तृत्वम् । न चासतः सा कर्तृता बुद्ध्यादेरेवादृष्टत्वात् । तस्मात्सूत्रपदं प्रतिषेधमात्रत्वादिति । मात्रपदाभावे व्यभिचार इत्यत आह ॥ **प्रतिषेधेति** । अयमर्थः । अभावरूपस्य धर्मिण ईशादेरप्यदुःखत्वादभावधर्मत्वात्प्रतिषेधात्मकत्वमस्त्येव न तु प्रतिषेधमात्रता । अभावे धर्मिणोऽभावत्वादभावस्य खपुष्पादेरपि प्रमेयत्वादिको भावधर्मः स्यात् । तस्मादिह तस्य भावधर्मव्यवच्छेदो न कृतः किन्तु प्रतिषेधमात्रतानाम धर्मिणोऽभावरूपत्वमेव तद्बुद्धिराहित्यमेव न तु बुद्धिराहित्यं विशेष्यतैव धर्मित्वम् । यथा शुक्लः पट इत्यादि । न चैतावता घटादिशब्दवन्नाशवत्कुत्रचिद्बुद्ध्यादौ शापादिना निःशेषविनाशेन कर्तृशेषत्वम् । अतोऽनैकान्तिकत्वं नाशत्वहेतोरित्यत आह ॥ **न चेति** । न चाशेषनृनाशो दृष्टः । तत्रापि शापादिकर्तॄणामवशिष्टत्वात् । अत एवेतःपरं च न दृश्यः । अत एव नास्ति च । इतोऽपि प्रलये सर्वासत्त्वं न दृश्यत इत्याह ॥ **धर्मेति** । प्रलये सर्वादृष्टस्यापि नाशे किं नश्छिन्नमित्यत आह ॥ **अनादित्वमिति** । अदृष्टमदृष्टपरम्परा कथमनादित्वं विना कस्याप्यर्थस्य कारणं स्यात् स्वरूपाभावप्रसङ्गात् । यदि प्रलयकालात्पूर्वादृष्टात्ततः परादृष्टमिति नियमो नाङ्गीक्रियते । तदुत्तरकालादृष्टं तस्मात्पूर्वनिमित्तमित्युच्यते । अदृष्टं कस्याप्यर्थस्य कारणं नो चेत्सर्वस्यासत्त्वधर्मिणि लये मानं च किं भवेत् । न ह्याकस्मिके कार्ये किञ्चित्प्रमाणम् । अपि च विमतावुत्पत्तिविनाशौ बुद्धिमत्कर्तृकौ उत्पत्तिविनाशत्वात् सम्मतवत् । तदाह ॥ **उत्पत्तीति** । श्रुत्यवसिते कर्तरि किमनुमानेनेत्याशङ्कां निरस्यन् **तर्काप्रतिष्ठानेत्यादि** । सूचयति ॥ **आगमेति** । अन्यथा सर्वस्तर्कोऽप्यप्रतिष्ठितस्तर्कत्वात्सम्मतवदित्यस्य तर्कस्य पक्षेऽन्तर्भूतत्वादन्यथाऽस्य वाचैतत्सिषाधयिषिता तर्कस्याप्रतिष्ठा व्याहता । यत्तु परैरुच्यते **न विलक्षणत्वा**दित्यादिना किञ्चिच्छिष्टजनपरिगृहीताः साङ्ख्या निराकृता **एतेन शिष्टा अपरिगृहा अपि व्याख्याता** इत्यत्र वैशेषिकादयः शिष्टा अपरिगृहीता निराकृता इति तन्निराकृत्य सूत्रार्थमाह ॥ **न चेति** । जीवादिकर्तृत्वत्यादिशब्देनाकर्तृकत्वचेतनकर्तृकत्वाचेतनकर्तृकत्वेन । नन्वसतः कारणत्वमसदिति

चेत्यादिना निराकृतं किमित्यत्र पुनर्निराक्रियत इत्यत आह । इदं वा अग्रेनैव किञ्चनासीत्तदेव सन्मनोऽकुरुत बहुस्यामिति श्रुतिः । अकस्माद्वीदमाविरासीदिति च । परिहारो विशेषतोऽत्र परिहारस्त्वसत इति शेषः । अत एवेदमतिदेशाधिकरणम् । वाक्यान्तरेण पूर्वपक्षे प्राप्ते सति पूर्वोक्तयुक्तिबाहुल्यन्यायेन परिहारात् । युक्तिबाहुल्यं दर्शयति ॥ **क्वचिदिति** । विमतं जीवाकृतमचेतनाकृतमसदकृतं वस्तुत्वाज्जीववदचेतनवदसद्वदित्यनुमीयते । श्रुतेः श्रुत्यानुकूल्यात्तस्मादतिप्रसङ्गादिदोषाणामत्रानवकाशः ॥ ४ ॥ **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदिति** सूत्रं व्याख्याति ॥ **नान्यदिति** । तदेवोपपादयति । कथं दृश्येदेष्यत्काले । अस्य सूत्रस्य परयोजनां दूषयति ॥ **भोक्तृत्वेति** । यदि भोक्तृभोग्ययोर्ब्रह्माभेदस्तर्हि भोग्यस्य जडस्य भोक्तृत्वापत्तेस्तयोरविभागः स्यादिति पूर्वपक्षीकरणं यदि मतं तर्हि भोक्त्रापत्तेरिति त्वप्रत्ययं विनाकुतः प्राह ॥ ५ ॥ **तदनन्यत्वमारम्भणशब्दादिभ्य** इत्यत्र परयोजनां निरस्य स्वयं योजयति ॥ **कथमिति** । अतीतपादे ब्रह्माविकारित्वं साधितं हि । द्रव्यं प्रधानादिः । तस्य स्वभावादिः परिणामादिः । चेतना चित् । जीव इति यावत् । **सत्वाच्चावरस्येति** व्याख्याति ॥ **तद्ब्रह्मस्येति** । तस्माद्धान्यं न परः किञ्चनासेत्यादिश्रुतेरपि ततोऽन्यत्किञ्चन विशिष्टं नास तदेव विशिष्टमित्यर्थः । अन्यथा पुनरुक्तिप्रसङ्गात् । ननु कारणाद्ब्रह्मणः कथं कार्यस्य जगतोऽनन्यत्वं स्यात् मृद इव घटस्येत्यत आह ॥ **नित्येति** । द्वयं भेदाभेदाख्यम् । तत्र युक्तिमाह ॥ **असदिति** । यत्प्रासङ्गिकं घटादिकं तदपि मृदादिकारणरूपेण तदाऽप्यस्त्येव हि । ननु नैव भेदः कार्यकारणयोर्न हि प्रागसिद्धस्य घटस्योत्पत्तिः किन्तु व्यक्तिरेवेत्यत आह ॥ **अनवस्थेति** । घटस्य व्यक्तिश्चेद्व्यक्तेः किमुत्पत्तिराहोस्विद्व्यक्तिः । उत्पत्तिश्चेद्घटस्यैव सा स्यात् । किमिति प्रथमा व्यक्तिः कल्प्यते । व्यक्तिश्चेत्तस्याश्चेद्व्यक्तिस्तस्याश्चेत्यनवस्था । कार्यस्य नाशोऽव्यक्तिरेव चेत्तस्या अपि पूर्वं विद्यमानायाः पश्चाद्व्यक्तिस्तस्याश्च तथेत्यत्राप्यनवस्था । अत्र प्रमाणमाह ॥ **शक्तोऽपीति** ॥ ६ ॥ **कृत्स्नप्रसक्तिर्निरवयत्व-**

**शब्दकोपो वेति** सूत्रं व्याख्याति ॥ **अनंशस्येति** । नन्वीश्वरांशगृहीतत्वेऽपि जीवस्य सांशत्वं प्राप्तम् । अथ यः स जीवः स नित्यो निरवयव इत्यादिश्रुतेः का गतिरित्यत आह ॥ **अंशिन इति** । विशेषादेवानेकरूपेषु न तु भेदात् । अस्त्येव हीति हिशब्देन सौभर्यादिप्रसिद्धिं द्योतयति । ननु विमता विभिन्ना बहुत्वाच्चैत्रमैत्रादिवदित्यत्रानुसन्धानवत्त्वेन भगवदनियतत्वमुपाधिः । तदेतदाह ॥ **बहुत्वेनेति** । यथा योगिरूपाणां परस्परानुसन्धानेन नियमकृन्नैव नियमकृद्भगवांश्चैव चैत्रादीनाम् । अथवा भिन्नं कृत्वा नियमकृन्न भगवान्योगिरूपाणाम् । तथा चानुमानस्य कालात्ययापदिष्टत्वं सूचितं स्यात् । अचिन्त्ययैशशक्त्यैव ह्येकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदेत्यागमविरुद्धत्वात् । ॥७॥ **आत्मनि चैवं विचित्राश्च हीति सूत्रं** योजयंस्तत्र युक्तिमाह ॥ **तस्येति** । ननु जन्माद्यस्य यतः। सर्वत्र प्रसिद्धोपदेशादित्यादौ सर्वजन्मादिकारणत्वसर्वगतत्वसर्वात्तृत्वपातृत्वादृश्यत्वादिगुणकत्वे सर्ववैशिष्ट्यं प्रतिपादितं हि । अत्र च तदनन्यत्वाधिकत्वविचित्रशक्तित्वसर्वोपेतत्वसर्वधर्मोपपत्तिवचनेन तदेव प्रतिपाद्यते । अतः कथं पुनरुक्तिर्न स्यादित्याशङ्कायामाह ॥ **विरोध इति** । यो नारायणस्य सर्ववैशिष्ट्ये विरोधः स निरस्यते द्वितीयेऽध्याये प्रथमे तु तत्तच्छ्रुतिसमन्वयमुखेन सर्ववैशिष्ट्यं प्रतिपाद्यते । तदन्ये तत्र तत्रगास्तत्राध्यायान्तरगाः । विरोधानिरासादसमन्वयादिप्रसङ्गप्राप्त्या महाविरोधपरिहारादन्ये ॥ ८ ॥ ननु **सर्वोपेता च तद्दर्शनादि**त्यत्र विकरणस्येश्वरस्य सृष्ट्यनुपपत्तिरपि परिहृता सर्वशक्तित्ववचनात् । अथ कथं **विकरणत्वान्नेति चेन्न तदुक्तमिति** । पुनरुक्तं न स्यादित्यत आह ॥ **मानमेयेति** । प्रमाणैक्ये सत्यपि प्रमेयविशेषेण पुनरुक्तिर्न जायते । अपाणिपादो जवनो गृहीतेति विद्यते तत्र प्रमाणविशेषविशेषः । ननु प्रयोजनार्थानामुचिता प्रवृत्तिः कथं पूर्णकामस्येश्वरस्येत्यत आह ॥ **सदेति** । भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहेति श्रुतावन्यमिति निरस्यपक्षमुक्त्वा देवस्येति स्वसिद्धान्तो ह्युच्यते । एष स्वभाव इच्छारूपः । स्वभाव इत्यनन्यनिष्ठः परावश इत्यर्थः । मत्तनृत्तवत्केवललीलेति निर्णीता ॥ **लोकवत्तु लीला-**

**कैवल्यमिति** सूत्रेण । का स्पृहेत्युक्तत्वादीश्वरेच्छैव नास्तीति न मन्तव्य इत्याह ॥ **आत्मेति** । भगवानध्यात्मप्रयोजनविवक्षया प्रयोजनवत्त्वादित्याह ॥ **इच्छामात्रमिति** । इति प्रशंसया सृष्टेरिच्छामात्रकारणत्ववादिनां निश्चितत्वविशेषेण प्रशंसया । सोऽकामयत । कामस्तदग्रे समवर्तताधीत्यादिकामश्रुतिभ्यः । विमत इच्छावान् चेतनत्वाच्चैत्रादिवदिति युक्तितो महातात्पर्ययुक्तिं स्वयमेवाह ॥ **मोक्षार्था इति** । प्रसादत इच्छानिमित्ततः । एष ह्येव साधुकर्म कारयति । तं यमेभ्यो लोकेभ्य उन्निनीषतीति वाक्यात् । प्रसन्नस्य राज्ञ इच्छया निगडबन्धस्य मोक्षो लोके दृष्टः । यथार्थं प्रमाणं न तु घटवदिति नियमस्तस्मात्कथं फलवत्त्वाभावे वेदस्य प्रामाण्यमित्यत आह ॥ **याथार्थ्यमिति** । तथाऽपि प्रयोजकं वाक्यमुच्यमानत्वमेतदिष्टसाधन एव शब्दव्युत्पत्तेस्तत्र हि वाक्यानां महातात्पर्यम् । तत्रापि यन्मोक्षाख्यं सम्पूर्णं प्रयोजनं वाक्यं तत्परमुच्यमानत्वमेति ॥ ९ ॥ **वैषम्यनैर्घृण्ये न सापेक्षत्त्वात्तथा हि दर्शयती**त्यस्यार्थमाह ॥ **वैषम्यामिति** । अधर्मकृतः सुखकृत्त्वं वैषम्यं धर्मकृतो दुःखकृत्त्वं नैर्घृण्यं च । वेदप्रामाण्यकारणं धर्मी स्वर्गं विधर्मी निरयमिति हि श्रुतिः ॥ १० ॥ सर्वाशङ्कापरिहारात्मकं **सर्वधर्मोपपत्तेश्चेति** सूत्रं व्याख्याति ॥ **यदधीना इति** । तत्तस्मात्सर्वधर्मोपपत्तेश्च । गुणाः श्रुताः सुविरुद्धाश्च देव इत्यादीनि वाक्यानि ॥ ११ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यविरचितायां नयचन्द्रिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥ २—१ ॥ * ॥

॥ श्रीगुरुभ्यो नमः ॥ हरि ॐ ॥ वृत्ताश्रवणपूर्वकमन्दाशङ्कां सहेतुकमुद्भाव्य पादसङ्गतिं दर्शयति ॥ **स्मृतिती** । अभियोगतोऽभ्यासतः । कथं प्रमाणबाह्यत्वे सत्यपि कस्यापि समयस्योच्छेदो न भवतीत्याशङ्कायामाह ॥ **दौर्लभ्यादिति** । एवं प्रबलैः समयैर्लोके स्थिरमन्यथाज्ञानं दुष्परिहरमित्यत आह ॥ **तथाऽपीति** । बुद्धिशाणत्वं बुद्धिनिशातत्वं बुद्धेर्नैशत्यमित्यर्थः । तत्र निरीश्वरसाङ्ख्यमतमनुवदति ॥ **चेतनेति** ।

पञ्चपञ्चविभागस्थं पञ्चकृत्वः पञ्चत्वेन विभागे स्थितमिन्द्रियमनोबुद्धिशब्दादिमहदादिविकृतस्येयं प्रकृतिश्चेति निरीश्वरसाङ्ख्येष्वेव भेदमाह ॥ **भोक्तृतामिति** । स्वरूपचैतन्यबलात्स्वरूपचैतन्याख्यसामर्थ्यात् स्वयंप्रकाशाद्भोगितामाहुर्भोगवादिन इति शेषः । आनुभविकस्य सुखदुःखभोगस्य का गतिरभोगवादिनामित्यत आह ॥ **प्रकृतेरिति** । प्रकृतेरन्तःकरणरूपायाः सुखादिधर्मिण्याश्च स्वरूपस्य च भेदाग्रहं सुख्यहमित्यादिभोगव्यवहारहेतुमाहुः । स एव भेदाग्रह एव मुक्तिरित्येतन्निराकरोति ॥ **ईशस्येति** । युक्तिविरुद्धत्वं दर्शयति ॥ **चेतनेति** । यदा यदि । अत्रायं प्रयोगः । विमत उद्भवश्चेतनाधीनो वस्तुत्वात्पटोद्भववदिति । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयन्नित्यादिश्रुतिरेव प्रमा हि नः किमन्यान्वेषणेन । प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तम इत्यादिस्मृतिश्चाप्तेन कपिलेनोक्तत्वादिदं सर्वं सिध्यतीत्यत आह ॥ **आप्तत्वमिति** । विमतो धर्मदङ्न स्यादित्यादिपूर्वोक्तमार्गेणापि च ज्ञानानां प्रामाण्यवदेवाप्रामाण्यस्यापि हि स्वतो भावं स्वीकरोति हि साङ्ख्यो न तु परतो दोषात् । अनेन न्यायेन स्वोक्तार्थस्याखिलस्यापि निषेधी स्यात् । यथा मायी सद्विलक्षणमेवासद्विलक्षणमित्यादि वदन्मूलकारणानुमा जगत्कारणानुमा केन भवेत् । एतदनुमानपराहतत्वात् । **रचनानुपपत्तेश्च नानुमानमिति** सूत्रं विवृणोत्येतदेवोपपादयन् ॥ **स्वतन्त्रेति** । आत्मप्रमाहतमात्मवचनविरुद्धं स्वव्याहतमित्यर्थः । तदेवोपपादयति ॥ **स्वेच्छेति** । यदीत्यादेरयमर्थः । यद्यात्मनो चेतनेच्छावता मनसा भेदस्याग्रहत्वादहमिच्छामीति व्यवहारो हेतुस्तर्हि स भेदाग्रहः कथमात्मनो घटस्य न स्यात् । मम घट इतिवद्भेदेनैव गृहीतत्वं मनसोऽपि सममित्यह ॥ **मनसेति** । ननु मनः कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति श्रुतेः कामादीनां मनोधर्मिकत्वात्कथमिच्छाऽऽत्मधर्म इत्यत आह ॥ **उभयेति** । परिणामे प्रियकाम आत्मनः पारिणामेऽप्रियकामो मनस इति द्वैविध्यम् । तस्मादात्मन इच्छावत्त्वात्कुतस्तत्र भेदाग्रहो व्यवहारहेतुरङ्गीक्रियते । उक्तार्थं निगमयति ॥ **रचनेति** । प्रधानं स्वतन्त्रं प्रवर्ततेऽचेतनत्वात्पयोम्ब्वादिवदिति सर्वज्ञत्वेनाभिमतकपिलानुमां **पयोम्बुवच्चेत्तत्रापीति** योजयंस्तद्दृष्टान्तस्य साध्यविकलत्व-

मुद्भावयति ॥ **पय इति ।** एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते । एतेन ह वाव पयो मण्डं भवतीत्यादावेतत्प्रशास्तिवचनात् । ननु मनसोऽपीच्छावत्त्वाङ्गीकारात्किमिति तद्रूपस्य प्रधानस्य कर्तृत्वं न स्यादित्यत आह ॥ **द्वैविध्येऽपीति ।** इच्छावत्त्वं नामेच्छास्वामित्वमेव विवक्षितं न त्विच्छारूपेण परिणामित्वं तन्मात्रं हि मनसः । ननु परिणामे स्वप्रियकारीदमिति जानतोऽपि पुरुषस्य स्ववशत्वात्तत्रेच्छा जायते । अतः कथं तस्या इच्छायाः स्वामित्वमित्यत आह ॥ **किञ्चिदिति ।** अस्ति हि लोके ग्रामादीनां किञ्चित्स्ववशत्वेन स्वामित्वव्यवहारः । सर्वात्मना स्वतन्त्रेच्छाशक्त्यादेः परेशितुः किमुतैव स्वामित्वं वर्णनीयम् । अस्माभिस्तु तस्य हि स्वतन्त्रकर्तृत्वं सिषाधयिषितम् । तदन्याभिधायिनी मनस इच्छारूपेण परिणामाभिधायिनी । इतश्च चेतनस्यैवेच्छावत्त्वमित्याह ॥ **मोक्षेति ।** अन्यो मनो नाम कोऽर्थः । मनसः स्वरूपनाशो हि तत्पक्षे मोक्षः । तथा च मनः स्वयमेव नागच्छेद्यत इत्यायातम् । तच्च कः कुर्यात् । तदाह ॥ **स्वनाशेति ।** भोगवादिनो दूषयति । कर्तृत्वं योऽहं कर्ता स एव भोक्ताऽस्मीत्यनुभवेनैवोपलभ्यते । तच्चशब्दान्निराकृतस्तस्मात्तच्छ्रुतेन चशब्देनापिशब्देन समुच्चित्य निराकृतः । यथा मायी ब्रह्म निर्विशेषत्वादेव रचनानुपपत्तेर्न कारणं तथाऽनुमानं चाचेतनत्वान्नेति ॥१॥ **क्लेशकर्मादि ।** अविद्यास्मितरागद्वेषाभिनिवेशाः पञ्चक्लेशाः । आदिशब्दात्कर्मफलभोगः । देहे सन्निधानमात्रतो न तु कर्तृत्वात् । **अन्यत्राभावाच्च न तृणादिवदिति** विवृण्वन्नेतन्मतं निराकरोति ॥ **अन्यत्रेति ।** तत्प्रधानं । पुरुषशक्तीनां सत्ताप्रतीतयश्च प्रवृत्तयश्च ताः सर्वास्तदधीनाः । **न** ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्चेति श्रुतिः । हे तत्त्वगणपते यशश्विन् । त्वदृते दूरेऽपि किञ्चन क्रियते महान्तमर्चनीयं सुखं चेतनत्रातारं त्वं च त्वमेवास्मानर्च प्रविश्येत्यर्थः । तदेव श्रुत्यन्तरेण द्रढयति ॥ **स्वभावेति ।** पतञ्जलिः सेश्वरसाङ्ख्यो विन्ध्यो निरीश्वरः ॥ २ ॥ अत्र चेतनाचेतनद्वयकल्पनायां गौरवम् । अचेतनमेव चेतनीभूतं मदिरादिद्रव्यवत्प्रवर्तत इत्यत्र लाघवम् । प्रमाणस्याप्येकस्य कल्पनमित्याशयवतां चार्वाकाणां मतमनुवदति ॥ **चार्वाकैरिति ।** **अभ्युपगमे**ऽ-

**प्यर्थाभावादिति** सूत्रं विवृण्वंस्तत्परिहरति ॥ **यदैवमिति** । यदा यदि । तेनैव प्रत्यक्षेणैव । देहव्यतिरिक्तात्मनि प्रमाणमाह ॥ **देहादीति** । यदि तत्साधकं साक्षिप्रामाण्यमभ्युपगम्यते तर्हि तद्वेदप्रामाण्ये कथं प्रमाणं न भवेत् । न चान्यमानता तदभिमतप्रत्यक्षप्रमाणेनावसीयते । आगमादेरप्रमाणं व्यभिचारिलिङ्गात् । गुरुवाक्याद्वाऽवसीयते चेदभ्युपगतागमादेरेव प्रामाण्यं निगमयति ॥ **स्वमतेनेति** ॥ ३ ॥ साङ्ख्यैकदेशीयान्निराकुर्वन् **पुरुषाश्मवदिति चेत्तथाऽपीति** सूत्रं व्याख्याति ॥ **सन्निधानादिति** । अबुद्धिपूर्वत्वादचेतनस्य स्वतन्त्रप्रवृत्त्यनुपपत्तिरुक्तदोषः । **अङ्गित्वानुपपत्तेरिति** सूत्रं व्याख्याति ॥ **अङ्गित्वमिति** । सर्वस्य सर्वानुभवस्य । यतोऽखिलं वर्तते तस्यापलापात्सर्वप्रमाणापलापक इति किमु वक्तव्यम् ॥ ४ ॥ तत्रैव पक्षान्तरं दूषयन् **अन्यथाऽनुमितौ च ज्ञशक्तिवियोगादिति** सूत्रं व्याख्याति ॥ **अङ्गित्वमिति** । सृष्टिकालेऽस्य शरीरसंयोगार्थं शरीरप्रेरणा कार्या हि । तत्र स्वयमशरीरत्वादशक्तः । अस्यैव जीवस्यैव । हिताक्रियादीत्यादिशब्दादहितकृतिः । इमे रचनानुपपत्तेरित्याद्युक्तदोषाः ॥ ५ ॥ वैशेषिकादिमतमनुवदति ॥ **नित्येति** । सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागैः पञ्चभिः सङ्ख्यादित्रयस्य सर्वत्रापि नित्याश्रितस्य नित्यत्वनियमान्नित्यत्ववचनम् । इच्छादीनां तु जीवेऽविनाशित्वादतस्तच्छङ्कोच्छेदनार्थं नित्यत्ववचनम् । तेषां सृष्ट्याद्यङ्गत्वेन पृथग्वक्तव्यत्वाददृष्टं जीवस्य पार्थिवाप्यतैजसवायवीयाश्चतुर्वर्गाः । तैश्चतुर्भिस्तदात्मकं त्र्यणुकं चतुर्भिश्चतुरणकं यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । अन्त्यपदेनाविशेषस्यान्त्यस्य।न्त्यव्यावर्तकत्वं लक्षयति । द्रव्यं त्वाकाशादि नित्यम् । तद्गतैकत्वादिगुणत्वं च पृथिव्यादिकमनित्यं तद्गतरूपादिगुणश्च । कार्यं इत्यादेरयमर्थः । कार्यगतगुणक्रियाणां कारणगतगुणक्रियायाः कारणैककार्यसमवायप्रत्यासन्नगुणक्रियायाः कारणैककार्यप्रत्यासन्नत्वादसमवायिकारणम् । कारणद्रव्यस्यासमवायिकारणम् । द्व्यणुके ह्रस्वत्वं द्व्यणुककार्यत्र्यणुके ह्रस्वान्तरस्य कारणं न भवति । परिमाणौ पारिमाण्डिल्यं च

तत्कार्ये द्व्यणुके पारिमाण्डिल्यान्तरस्य कारणं नेति विशेषः । तत्र किं निमित्तमित्यत आह ॥ **वैरूप्यमिति** । विजातीयपरिमाणाक्रान्तत्वम् । **महद्दीर्घवद्व्वान्ह्रस्वपारिमण्डलाभ्यामिति** योजयंस्तन्निराकरोति ॥ **तानिति** । पूर्वपक्षयुक्तिमाह ॥ **सदृशस्येति** । अणुपरमाण्वोरणुप्रत्यक्षत्वं कार्येषु त्र्यणुकादिष्वणुत्वं कारणगुणसदृशमुत्पद्यते चेत्तेषामप्रत्यक्षत्वं स्यादेवेत्यर्थः । न महत्त्वमिति परिहरति । परमाणौ स्वावयवत्वादणौ च परमाणौ महत्त्वं कथं न स्यात् । त्र्यणुकपूर्वेष्वपि चतुरणुकादिभ्योऽणुत्वं न कथ्यते । अखिले वस्तुनि प्रत्यक्षत्वाप्रत्यक्षत्वे पुरुषापेक्षया । तथा हि । सूक्ष्मदर्शिनां प्रत्यक्षास्त्र्यणुकाद्याश्च स्थूलदर्शिनामप्रत्यक्षा हि परमाण्वादयोऽपि केषाञ्चित्प्रत्यक्षा एव । ननु यतः परमाणुर्नास्ति स परमाणुः कस्मात्कथं परमाणोर्निरवयवस्य स्वावयवेभ्यो महत्त्वम् । अयं च प्रयोगः । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम् । परिमाणतारतम्यत्वान्महत्परिमाणतारतम्यवदिति चेत् । महत्त्वस्यापि विश्रमाभावात्साध्यविकलो दृष्टान्तः । तदाह ॥ **यथेति** । ननु कश्चिदीश्वरान्महीयानस्ति । अतस्तत्र विश्रान्तं महत्त्वतारतम्यमित्यत आह ॥ **नेति** । महत्तत्त्वगुणेनेश्वर एतावानिति परिच्छिन्नो महत्त्वाद्दशगुण एवेश्वरो नातोऽधिक इति । तथा सर्वस्मादणोरपि त्र्यणुकस्य दशगुणभागता क्वचिन्न स्यात् । विश्रान्त इत्यादेरयमर्थः । यदि सर्वथाऽप्ययं परमाणुर्विश्रान्तो विश्रामस्थानं तस्मादणोरभिन्नस्याभावादित्युच्यते तथाऽपि कश्चिदनन्तांशवानस्तीत्येव स च गम्यते न तु सर्वस्मादणुरित्यवसायितुमशक्यः । स्वांशेभ्यो महत्त्वाद्विरोधादेव केवलमनुभवविरोधादेवेत्यर्थः । तदेवोपपादयति ॥ **केवलमिति** । ततोऽपरत्रापि देशोऽस्ति ततः परश्चादपि कालोऽस्ति ततः पश्चादपि नान्तवान् । तथाऽणोर्द्वयोर्महत्त्वाणुत्वयोर्मानतोऽपर्यवसितिः साक्षिणा दृश्यते । अणोश्चाणुर्नास्ति तस्माच्चाणुर्महानस्ति । तस्माच्च तस्माच्चेति यदि महत्त्वं साक्षिगम्यत इत्युच्यते तर्हि प्रमाणेन गम्यत इति वाच्यम् । अनुमानतोऽणुत्वतारतम्याविश्रान्तिकल्पनायां दृष्टान्तत्वेनाभ्युपगतं हि । तद्यदि तन्महत्त्वमागमादवगम्यत इत्युच्यते तर्ह्यनन्तत्वेनैवावगम्यते ।

तद्दृष्टान्तेनाणुत्वमपि कुतोऽनन्तत्वमेव नावसीयते । तदुभयानन्त्यमेव विशेषतः प्रतिपादयति ॥ **महत्त्वेति** । महत्त्वाणुत्वयोरनन्तत्वमात्रेण समम् । तथाऽपि परस्परमन्यदेव विलक्षणमेव महत्त्वादुद्रिक्ततया ह्यनन्तत्वाणुत्व ऊनत एति । तत्रोदाहरणमाह ॥ **बहुत्वेति** । एकं द्वे त्रीणीति बहुत्वे वर्तमानानामेकभागानामेवानन्त्यम् । एकत्र ततो द्वितीयांशस्ततश्च ततश्चेत्यल्पत्वे वर्तमानानां च तावत्त्वं ह्येव गम्यते । सङ्ख्यायामनन्तत्वमेव हि गण्यते । न त्वितः परं नास्तीति परिच्छिन्नत्वम् । अणोरणीयान्महतो महीयानात्मेत्यागमोदिते भगवान् स य एषोऽनन्त इत्यादिरानन्त्यवाचकः शब्द ईशस्य स्वरूपतो गुणतोऽणोर्ज्ञानादिगुणतः कालतश्चाल्पत्वमस्तु । तथा च तस्याज्ञत्वविनाशित्वादिप्रसङ्ग इत्यत आह ॥ **नैवेति** । तावत्त्वमेवेत्यादेरयमर्थः । अल्पगुणत्वमात्रमल्पकालवर्तित्वं नास्माकं मतम् । महतोऽपि विशेषादणुत्वं घटत इत्यत्र **अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चेति** सूत्रं प्रमाणीकरोति ॥ **महत इति** । कथमल्पदेशस्थत्वसर्वदेशस्थत्वे युगपदेकस्यैव भगवतः सर्वदेशस्थश्चेदल्पदेशस्थत्वं नैव स्यात्तस्येति शङ्कां परिहरति ॥ **यदीति** । बहूनामल्पदेशानां समुदायः स हि सर्वदेशो नामेत्याकूतम् । प्रकृतार्थं निगमयति ॥ **अत इति** । तर्ह्येवं मुख्यं महद्भवेत् । अन्यथाऽणुत्वानन्ताख्यमहिम्नोऽभावादमुख्यमहदेव । अणुत्वाविश्रान्तिसाधकस्य साक्षिणः प्रामाण्यं साधयति ॥ **यदीति** । स्वयंभातः स्वयंप्रकाशः स्वप्रामाण्यं च स्वयमेव गृह्णातीत्यर्थः । अथवा साक्षिणोऽनङ्गीकारपक्षादेः प्रामाण्यग्रहणार्थं प्रमाणान्तरं तस्यापि तस्यापीत्यनवस्था । यतः परमाणोर्नास्ति परमाणुः स परमाणुरिति परमाणुलक्षणं वदता तेन तत्परमाणूनां निरवयवत्वमभिप्रेतम् । तन्निराकरोति ॥ **अतः सर्वेति** । तर्हि सृष्टिकारणस्य कस्यचित्परमाणोः किं लक्षणमित्यत आह ॥ **अविभाग इति** । यतः परं विभागो नास्ति स परमाणुरित्यर्थः । कारणस्य परमाणुद्व्यणुकादेर्महत्त्वादिगुणा एव त्र्यणुकादिकार्यगा भवेयुः । कणादस्य केवलमन्यथाकल्पना कथं साक्षिमितस्याणुत्वाविश्रान्त्यादेर्वारणे शक्नुयात् । ननु न वयं साक्ष्याख्यं प्रमाणमङ्गीकुर्महे यदणुत्वाविश्रान्तावुपन्यस्तौ । नास्माकं देशादिक-

मपि साक्षिसिद्धमित्यत आह ॥ **यदीति** । यदि देशादिकं साक्षिमितमिति न तर्हि केन मीयत इति शेषः । अनुमेत्यत आह ॥ **नेति** । पक्षज्ञानासम्भवात्पक्षीकर्तुमशक्यत्वं केनचित्प्रमाणेन पक्षो ज्ञायते चेदनुमाप्रयोगवैय्यर्थ्यं स्यात् । देशादिस्वरूपमात्रमनुमातुं यः पक्षमेव न जानाति स कथमनुमिमीत इत्यर्थः । अस्मिन्नर्थे दृष्टान्तरूपेणार्थान्तरोपन्यासं करोति ॥ **यत्रेति** । ननु परिदृष्टो देशो देशान्तरवान् देशत्वाद्धस्तादिपरिच्छिन्नदेशवत् । परिदृष्टः कालः कालान्तरवान्कालत्वादतीतक्षणवदित्यनुमानसिद्धं देशादिकमित्यत आह ॥ **देशेति** । परिदृष्टशृङ्गाणि शृङ्गान्तरसमानकानि शृङ्गत्वाद्गोवदिति । तेन न्यायेन शृङ्गत्वाद्गोवदिति । तेन न्यायेन शृङ्गादेरपि सिद्धिः स्यादिति भावः । इयमक्षरयोजना । देशान्तरादिशब्दास्तु शशशृङ्गादिवाचिशृङ्गान्तरशब्दवदेव । अत्रेदमाकूतम् । न तावद्धर्मिग्राहकप्रमाणेनैव साध्यसिद्धे सत्यनुमानावकाशः । तथाऽप्यनुमीयते चेत्तदतिप्रसङ्गव्याहतमिति । विमतो देशादिः सजातीयवानिति च न वाच्यमित्याह ॥ **सदृशमिति** । सजातीयं नाम सदृशमेवेष्टव्यम् । तद्विवक्षितस्यानुगतधर्मस्य निराकरिष्यमाणत्वात् । अस्मत्पक्षे किमेव हि केन सदृशं न स्यात् । सर्वस्यापि वाच्यत्वादिसादृश्योपलभ्यत्वात् । तस्मात्तेन न्यायेनापि शशशृङ्गाद्यनुमितिः स्यात् । अत्यसिद्धमतीन्द्रियं वस्तु तर्हि कीदृशमनुमानं प्रमाणमित्यत आह ॥ **प्रत्यक्षमिति** । उक्तार्थमेव प्रपञ्चयति ॥ **सैवेति** । शिष्योपाध्ययोरिव सहदर्शनमात्रेण मूलप्रमाणनिश्चयं विना व्याप्तिर्नावसीयेत । यदैव यथैवान्व्यतिरेकस्याविनाभावाख्याक्षजादिग्राहको भवेत्तर्हि सैव व्याप्तिर्यथा । **समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति** योजयंस्तत्कल्पनान्तरमनूद्य दूषयति ॥ **कार्येति** । गुणगुणिक्रियातद्वज्जातिव्यक्तिविशेषविशेष्यावयवावयविपञ्चकस्य च तस्य समवायसम्बन्धस्य ताभ्यां सम्बन्धिभ्यां सम्बन्धोऽप्यपेक्षितो भवेत् । तस्यापि तस्यापीत्यनवस्था । ननु तयोः सम्बन्धरूपसमवायाख्यसम्बन्धिनोऽपि स्वयमेव सम्बन्ध इति सर्वनिर्वाहकत्वादित्यत आह ॥ **स इति** । द्रव्यमेव स्वगुणक्रियादिरूपेण तथा स्वनिर्वाहकं न स्यात् । किमनेन समवायेन । पुनश्च विशेषं साधयति ॥ **विशेष इति** । यद्यभिन्न एव समवायो

|| **समुदायस्त्विति** | समुदायत्वधर्मस्तु नियमेन भिन्नः | यथैकातिरिक्तसङ्ख्याधर्मः | एतादृशत्वं नरत्वगोत्वादिकं सादृश्यमेव समनरत्वादिधर्मः | उक्तार्थं श्रुतिरप्याह | कालान्तरेऽप्यनिवृत्तत्वेन निवृत्तिरहितत्वेन विनाशो येषामिति निवृत्तविनाशाः | अतो घटपटादीनामात्मनश्च प्रत्यक्षत्वप्रमाणेनैव भिन्नत्वनिश्चयात् | नन्वनन्तासु व्यक्तिष्वेकमनुवृत्तधर्मं विना शब्दसम्बन्धज्ञानानुत्पत्तिरेकत्र दृष्टं हि गोत्वं सर्वत्रापि व्युत्पत्तिं ग्राहयतीत्यत आह || **व्युत्पत्तिरिति** | गौरानीयतामिति प्रयुक्तो गोशब्दः सर्वेषु सास्नादिमत्त्वेन सदृशेषु प्रवर्तते | तर्हि कथं विवक्षितावगतिरित्यत आह || **तथाऽपीति** | प्रातितः प्रकरणालिङ्गाद्युपपात्तितः | निगमयति || **शक्तिरिति** | अयं सास्नादिमान् अन्यस्तादृशश्च गोशब्द इति सादृश्यं ज्ञापयति | शब्दस्य वाचकत्वशक्तिः सादृश्यानुगेति यतो यस्मादेव | जातित इत्यादेरयमर्थः | जातित इत्येवं व्युत्पत्तिः सम्भवति चेत्कथं तासु गोत्वनरत्वादिजातिषु तत्तच्छब्दव्युत्पत्तिः | तत्रापि जातित्वजातिरस्तीति चेत्तत्रापि व्युत्पत्त्यर्थं जात्यन्तरकल्पना तत्रापीत्यनवस्थितिः | व्यक्तिषु संज्ञासम्बन्धविज्ञानमपि व्यक्तेर्वैजात्यभावेनैव दूषितम् | यदि व्यक्तित्वं नाम सामान्यमस्ति तर्हि तस्याश्रयेषु विशेषव्युत्पत्त्यर्थं विशेषान्तरकल्पना तत्रापि तत्रापीत्यनवस्था | अपि च | सर्वसामान्यधर्मेभ्यो व्यावृत्तं वस्तुस्वरूपं हि विशेषो नाम | तस्माद्विशेषत्वमनुगतमित्युक्ते स्वरूपत्वमनुगतमित्युक्तं स्यात् | स्वरूपत्वमनुगतं चेद्व्यावृत्तान्तरं विना कथं ज्ञायते व्यावृत्तान्तरकल्पनायां स्वरूपस्यानुगतत्वकल्पनयाऽस्य स्वव्याह-तिः | तदाह || **कथमिति** | एकस्य जातिशब्दस्यैकस्य व्यक्तिशब्दस्य च सादृश्यद्वारेण व्युत्पत्तिपर्यन्तमुभयथाऽप्यनवस्थादिदूषितमेतन्मतम् | आदिशब्दात्कल्पनागौरवम् | विशेषमनङ्गीकुर्वतां पक्ष औपाधिकमपि न घटत इत्याह || **औपाधिकेति** | पाचकत्वादिकमौपा-धिकमिति ्च्यते | समवायिभेदश्च तदौपाधिकम् | किं तच्चैत्रादिवदाहोस्वित्ततोऽन्यत् | अग्निमन्नामविशिष्टं किं पर्वताख्यं वस्तु ततोऽन्यद्वा | आदिशब्दाद्भेदादि | तदेव चेत्किमिति तत्र पर्वतेऽग्निमत्त्वं भण्यते | पर्वतोऽग्निमानित्युक्तेरपि पर्वतः पर्वत इतिवदभिन्नार्थकत्वात् |

न हि विशेषणैरङ्गीक्रियते । अथ विशिष्टं पर्वतादन्यद्यत्किञ्चिदाग्निसंयोगमात्रमिति चेत्तत्पर्वतोऽग्निमानित्यनुमानं सिद्धसाधनं भवेत् । अग्निसंयोगमात्रस्य महानसादौ सिद्धत्वात् । यदि भूधरस्येति षष्ठ्यर्थस्तथाऽपि सिद्धसाधनं स्यात् । अस्य च समवायस्य महानसाग्निसंयोगसमवायेनैकत्वात् । न तु महानसाग्निसंयोगोपाधिभिन्नः । तत्समवायः पर्वताग्निसंयोगसमवायस्तदुपाधिभिन्नः । एवं तदुपाधिभिन्नो ह्ययं समवाय इत्यत आह ॥ **यदीति** । नन्वमुख्यो ह्यौपाधिकोभेदस्तस्मात्तेनैकत्वभङ्गः स्यादित्यत आह ॥ **नेति** । मायावाद्यन्यथा भवेत् । सत्त्वासत्त्वविलक्षणाङ्गीकारे मायावादी भवेदयम् । भूयात्खल्वेष दोषस्तस्य प्रच्छन्नबौद्धत्वात् । पर्वताग्निसंयोगाद्युपाधीनामनन्तत्वात्समवाया अनन्ताः । इतस्ततस्तु तत्तत्पदार्थेषु कार्यकारणगुणगुण्यादौ । एवं च स्वाभाविकभेदात्को विशेष औपाधिके लक्ष्यते । तस्माद्वृथेयमुपाधिकल्पना । औपाधिकविकल्पेऽप्ययमेव न्यायः। तत्रापि चैत्रस्य पाचकत्वमित्यादौ षष्ठ्यर्थत्वेन समवायस्यैव तेनाभ्युपगतत्वात्तत्पक्षे पदार्थानामुत्पत्तिरेव न घटत इत्याह ॥ **एवमिति** । एवमौपाधिकभेदवान् असतः सत्तासमवायो हि जनिः । तत्पक्षे तत्रापि स भेदो विद्यमानश्चेदपसिद्धान्तः । नो चेद्घटोत्पत्तावेव सर्वोत्पत्तिः । असतो घटसत्तासमवायेन सर्वसमवायस्यैकत्वात् । ननु युष्मत्पक्षेऽपि न हि पर्वतादिमात्रं विशिष्टादिकम् । तस्मात्कथमुक्तदोषो न स्यादित्यत आह ॥ **अस्मादिति** । विशिष्टादीनां विशेष्यादिभिरैक्याङ्गीकारेऽपि दोषो नास्ति । क्वचिद्देशे काले च भावरूपः स घट एव । देशान्तरे च कालान्तरे च भावरूपविशेषबलाद्धि भावाभावयोरुभयोरपि प्रसिद्धिद्योतकौ । अन्यथाऽयं घटः पूर्वमसन्न घटे बहिरसन्निति सामानाधिकरण्यानुपपत्तिः। अत्र सत एव घटस्य देशान्तरकालान्तरयोरसत्त्वानङ्गीकारे तस्य व्याप्तत्वं नित्यत्वं च स्यात् । एकस्यैव भावाभावरूपत्वं धर्मद्वारेणापि प्रतिपादयति ॥ **अभावस्येति** । तस्मात्प्रध्वस्तादभावस्य च भावधर्मसम्भवात्प्रध्वस्तघटस्य विद्यमानत्वाद्भेदो वाच्यतादि च सदस्ति शशविषाणस्याभावोऽस्ति च घटस्य प्रध्वस्ताभावो देहस्याभावो देहस्य भावो घटाभावः कपालभाव इत्यादि विशेषाद्युज्यते । गतमेव गतं निरस्तमित्यर्थः । न च शङ्कनीयं

भेदस्य त्रैविध्यं विशेषभावस्याभावरूपत्वं केवलानुमानस्यासाधकत्वमित्यादिकमपि पुनरुच्यत इति । तत्र तत्र प्रसङ्गप्रसक्तत्वात्तात्पर्याच्च मुहुर्वचनसाफल्यात् । भेदस्येत्यादेरयमर्थः । भेदस्य घटस्वरूपत्वे घटस्य रूपोत्पत्तावेव विदारणं स्यात् । तत्कपालानां पांसूनां च भेदस्य स्वरूपत्वे विदारणं स्यात् । भिदिर्विदारण इति धातुः । एवं सर्वविदारणेन सर्वविनाशाद्ये घटस्य शून्यतां वदन्ति ते भूतरूपाः । भेदशब्दस्य विदारणार्थाभ्युपगमेऽप्यन्ततः शून्यता न स्यादित्यत आह ॥ **विभागेनेति** । तत्र युक्तिमाह ॥ **नेति** । यत्संयोगोत्पत्तिस्तद्वियोगेन हि नाश इत्याकूतम् । तदाऽयं धातुर्विदारणार्थोऽभ्युपगम्यते तदा द्रव्यावयवानां मिथो विभागगुणवाचको भवति हि । अत्र तद्व्यतिरिक्तमन्यत्वमेव विवक्षितम् । भिदान्यत्वमिति च पठन्ति । तदाह ॥ **विदारणेति** । अभ्युपेक्षितोऽस्मिन्वादे सूत्रकृतेति शेषः । ईश्वरस्यानन्दादिगुणान्निरस्य परेणाभ्युपगतमष्टगुणत्वमात्र दूषयति ॥ **न चेति** । आनन्दस्यन्दिन आनन्दपूर्णा इति भावः । अप्रमितत्वतोऽपरिच्छिन्नत्वतः । मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । यदासीत्तत एवाद्यः स्वयम्भूः समभूदज इति तद्वाक्यं भगवद्वाक्यं भागवते । एकैकगुणतोऽप्यनन्ते ज्ञानानन्दादयो गुणाः प्रत्येकमप्यनन्ता इत्यर्थः । यदासीदब्जम् । आदिशब्दादनन्तत्राहुरनन्तगुणोऽनन्तरूप इत्यादिका । एकैकगुणतोऽप्यनन्ते ज्ञानानन्दादयो गुणाः प्रत्येकमप्यनन्ता इत्यर्थः । एकैकगुणानन्त्यं साधयति ॥ **यदीति** । आदिशब्दादिच्छादिघटाविषयत्वपटाविषयत्वादिति शेषः । तज्ज्ञानादेर्न स्वतः किन्तु घटाद्युपाधिक एवेत्यत आह ॥ **औपाधिकेति** । ज्ञानस्य स्वप्रकाशविशेषानङ्गीकारे दूषणमाह ॥ **स्वेति** । यैर्ज्ञानस्य निवारितं तेषां पक्ष इति शेषः । स्वज्ञानाधिगमं विना कथं सर्वज्ञता तस्येश्वरस्य स्वज्ञानस्यापि सर्वान्तःपातित्वात् । एष एवेत्यादेरर्था उच्यन्ते । **यो** अयमनयोर्ज्ञानयोर्विषयविषयिभाव उक्तः स एष एवार्थः । तज्ज्ञानावसितो यदि विश्वज्ञानावसितो यदि । तर्हि विश्वज्ञानस्य स्वयंप्रकाशत्वं स्यादेव । तद्विश्वज्ञानमेकस्य विषयविषयिभावसम्बन्धस्य विशेषणं हि सम्बन्धित्वेन किञ्चिदज्ञानावसितो यदि । अथवा परमेश्वर एष पदार्थो विश्वज्ञानावसितो यदि । तद्विश्वज्ञानमेतद्विश्वज्ञानमेतस्य परमेश्वरस्य विशेषणं हि । अहं विश्वज्ञानवान-

स्मीति हि तत्परमेश्वरं ज्ञापयति । तथा चाप्रकाशत्वं स्यात् । अपि च परमेश्वरो ज्ञानाज्ञानावसितो यदि ज्ञानाज्ञानमेतद्विशेषणं हि । अहं ज्ञानाज्ञानवानस्मीति हि तं ज्ञापयति । अपि च । एष ज्ञानाज्ञानाख्य एवार्थो विश्वज्ञानावसितो यदि । ज्ञानाज्ञानं ह्येतस्य विश्वज्ञानस्य विशेषणं ज्ञापकत्वेनेदं विश्वज्ञानाज्ञानमिति हि विश्वज्ञानं तज्ज्ञापयति । तथा चाज्ञाननिवृत्तिः । एषोऽर्थो ज्ञानान्तरेणावसितश्चेत्तज्ज्ञानमपि तथेत्यनवस्थितिः । नन्वीश्वरस्य सुखवत्त्वे दुःखवत्त्वप्रसङ्गः । तथा हि । विमतो दुःखवान्सुखवत्त्वात् । यः सुखवान्स दुःखवान्यथा चैत्र इति । इयं व्याप्तिर्नो भवेत् । श्रुतिविरुद्धत्वादिति भावेनाह ॥ **सुखवानिति** । योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोक इति निर्दुःखत्वम् । आनन्दं ब्रह्मणो विद्वान्न बिभेतीति महानन्दश्चेशस्यैव भण्यते हि । एवं परहेतोः कालात्ययापदिष्टत्वमुद्भाव्याप्रयोजकत्वदूषणं चाह ॥ **ईश्वरस्येति** । न हि चैत्रदुःखित्वे सुखित्वं प्रयोजकम् । किन्त्वीश्वरस्य दुःखितयेष्टत्वं तत्र प्रयोजकम् । सुखित्वसाधनं दुःखित्वसाध्यमुपाधत्ते विभजतीति दुःखित्वोपाधिः । नन्वीश्वरस्य दुःखितयेष्टत्वमीश्वरे स्वस्मिन्नपि स्यान्नाम । एवं च साधनाव्यापकत्वाभावादुपाधित्वं न स्यादित्यत आह ॥ **न चेति** । न हि कस्यचिदात्मदुःखितेच्छा स्यात् । चैत्रसुखित्वदुःखित्वयोः सहदर्शनमात्रेणानन्दं ब्रह्मेत्यादिश्रुतीनामपलापतो यज्ञादिः पापहेतुर्हिंसायुतत्वाद्ब्रह्मकुलोत्सादनवदिति नानुमाति किम् । यदि तत्र ब्राह्मणो न हन्तव्य इत्यादिश्रुतिनिषिद्धतोपाधिः । तर्हि श्रुतेः प्रयोजकत्वाङ्गीकारात्परसाधनस्यासिद्धत्वेन श्रुत्यनुक्तत्वं कथं नोपाधितां व्रजेत् । यदि श्रुत्युक्तिर्निर्णयकारणं तर्हि श्रुत्या दुःखित्वेनोक्तमप्युपाधिः स्याद्धि । तस्माच्छ्रौतेऽर्थे किमनुमानेनाजागलस्तनवद्व्यर्थेनेत्याह ॥ **किमिति** । न बुद्धो धर्मदर्शी स्यात्पुंस्त्वादित्यादिपूर्वोक्तेन प्रकारेण । एवमीशस्यानुमया सिद्ध्यसम्भवादनानन्दानुमायाश्च श्रुतिर्धर्मिप्रमा भवेत् । नित्यमेव च भावादिति योजयंस्तत्पक्षे विशेषानङ्गीकारादतिप्रसङ्गमुद्भावयति ॥ **नित्येति** । तत्पक्षे कालोऽप्यौपाधिकभेद उक्तरीत्या निरस्तः । विशेषकाले भिन्नकाले । सर्वे निमेषा जज्ञिरे । विद्युतः पुरुषादधि ।

कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः । अर्धमासा मासा ऋतवः संवत्सरश्चेति श्रुतिः । सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः । उवास तस्मिन्सलिल इति भागवते । कालस्योत्पत्त्यङ्गीकारे तदर्थं कालान्तरकल्पना । तदर्थं च तथेत्यनवस्थया विरोध इत्यतो ब्रूते ॥ **कालस्येति** । अस्मत्पक्ष इच्छायाः सृष्टिविषयत्वे तस्याः सृष्टिविषयत्वायसङ्ख्यातविशेषत्वान्न कश्चन विरोध इत्याह ॥ **असङ्ख्यानेति** । कालस्य स्वाख्यकालगत्वं श्रुत्या युक्त्या चोपपादयति ॥ **ईश इति** । ईशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यतेति च श्रुतिः । न च तावता साम्यमिति भावेनाह ॥ **ईशाधीनाविति** । तद्गतौ तत्रैव गतौ न तु तदतिरेकेण व्याप्तौ । स्वोद्दिष्टे स्वयमित्युद्दिष्टे न त्वन्यस्मिन् । अतः कालस्येशाधीनत्वात्कदा कस्योत्पत्तिरिति पृष्टे दशममास इत्युक्ते स कालः कस्मिन्काल इति च पृष्टे स कालस्तदैवेति लोकव्यवहारः कालस्य स्वगतत्वतो हि यस्मात् । एवं चेत्सर्वमपि तत्तत्स्वभावः स्यान्न विष्णोरित्यत आह ॥ **स्वाभावादिति** । न हरिं विना ज्ञानस्वभावतोऽपि स्यादित्यादावुदितः । पुरा सृष्टिस्थितिक्षययतिप्रकाशावृतिबन्धनम् । सर्वक्षराणामेवैकः कुर्यात्सात्त्विकमोक्षणम् । सर्गस्थितियतिज्योतिर्नित्यानन्दप्रदोऽक्षरे । चेष्टाप्रदश्च सर्वसामेक एव परो हरिरिति परमश्रुतिरिति । ततः सर्वस्वभावस्य तद्वशत्वात् । **रूपादिमत्त्वाच्च विपर्ययो दर्शनादिति** सूत्रं विवृणोति ॥ **रूपेति** । अतोऽष्टगुणेशवादिमतस्यानुपादेयत्वादानन्दाद्यनन्तगुणमयदेहात्मकेश्वरप्रतिपादकोऽयं समन्वयो न विरुद्ध इति सिद्धम् ॥ ६ ॥ चतुर्विधेषु बौद्धेषु वैभाषिकाश्च सौत्रान्तिकाश्च बाह्यार्थवादिनो जगदेवमाहुः । स्ववीर्यमात्रेणैव क्षणविनाशिपरमाणूनां समुदायविशेषरूपं चात्मानं च ज्ञानमात्ररूपं क्षणिकमाहुः । एतेषां परमाण्वादीनां जगत्पञ्चस्कन्धात्मना स्थितं चाहुः । स्थितिः पञ्चस्कन्धानामिति शेषः । **समुदाय उभयहेतुकेऽपि तदप्राप्तिरिति योजयं**स्तन्मतं निराकरोति ॥ **समुदाय इति** । उभयोः सकाशान्न युज्यते । उभयशब्देनानेकमत्र विवक्षितं न द्वित्वमात्रम् । **इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वादिति** सूत्रं व्याख्याति ॥ **अन्योन्येति** । तच्च

समुदायत्ववेदनम् । सृष्टिकाले परमाणूनां सामीप्यहेतुकं प्रलयकाले तेषां दूरस्थत्वात्तन्नास्ति । तस्मात्सदातनानां परमाणूनां संयोगाज्जगदुत्पद्यत इति चेत्परमाणुपुञ्जाख्यं कारणं प्रलये दूरस्थं पश्चादपि दूरस्थं कार्यमेवापादयेन्न तु समीपस्थं किमुतैव संयुक्तम् । अतोऽयं च दोष सम्प्राप्त इत्याह ॥ **अत इति** । अतः स्वोत्पत्तिमात्रस्यैव स्वनाशनिमित्तत्वात्प्रलय आत्मनः संयोगिरूपराहित्यात्सृष्टिकालेऽप्यर्थैरिन्द्रियसंयोगिरूपस्य कारणता नैव स्यात् । तज्ज्ञानताऽपि नैव हि । तेष्वर्थेषु ज्ञानमस्येति तज्ज्ञानः । अतो विशेषकार्यजनकत्वाङ्गीकाराद्धटादिकं पटादिकस्य कारणं स्यात् । मूलसृष्टावात्मनश्च संयुक्तपरमाणूनां कारणं स्युः । नन्वात्मनामदृष्टं सृष्टिनिमित्तत्वतः परमाण्वादीनां संयोगादिविशेषनिमित्तमित्यत आह ॥ **अदृष्टमपीति** । तथा सत्येवमापद्यत इत्याह ॥ **कार्यं चेति** । नियामकाभावात्कस्यचित्स्वतन्त्रस्य नियामकाभावात् । फलादीनां विशेषसम्प्रतिपत्त्या क्षणिकत्वं प्रतिपाद्य तद्दृष्टान्तेनानुमीयते । यत्सत्तत्क्षणिकं यथा फलादि । सच्च विवादास्पदीभूतमिति । एवं प्रत्यक्षसिद्धस्य स्थिरत्वस्यापलापे सति विशेषः कथं सिध्यति । तत्र चायं प्रयोगः । यत्सत्तदविशेषं यथाऽऽकाशादि । सच्च । विवादास्पदीभूतमिति । नन्वयं दृष्टान्तः साधनविकलः । आकाशस्य मूर्तद्रव्याभावरूपत्वादित्यत आह ॥ **यदीति** । अस्मिन्नाकाशेऽवलोको नास्तीत्यधर्मप्रतियोगिकत्वम् । आकाशस्तु नरादिवद्विधिमुखेनैव ह्यवगम्यते । उन्मत्तस्तु क्वचिदेव दृष्टं त्यजत्यदृष्टं स्वीकरोति च न तु सर्वत्र । तस्मादमुष्मात्स गुणवान् । **उत्तरोत्पादे च पूर्वनिरोधात् । असति प्रतिज्ञोपरोधो यौगपद्यमन्यथेति** सूत्रयोः पूर्वमप्यभिप्रायः सूचित इदमस्यैवेत्यादिना । न हि पदार्थानां यौगपद्ये कार्यकारणव्यवस्थेदमिति च सा निराकृता । इदानीं विस्तरत आह ॥ **उत्तरेति** । सादृश्यनिबन्धना भ्रान्तिः प्रत्यभिज्ञा । सादृश्यं च प्रत्येकं संस्काराज्ज्ञायत इति च न युक्तम् । संस्कारस्यैवाभावादित्याकूतम् । अतः क्षणविनाशित्वादात्मनां सादृश्यासम्भवाच्च पूर्वं तन्मया ज्ञातमिति ज्ञानं न सम्भवतीत्याशङ्क्य पक्षेऽनुमा कुत एव व्याप्तिस्मरणासम्भवात्संस्कारार्पकत्वात्सम्भवं प्रपञ्चयति ॥ **कार्येति** । सम्बन्धा एव

कौतुकादयोऽन्यत्र पटादिषु संस्कारमादधते । असंस्कारतः संस्काराभावात् । तन्निबन्धसादृश्याभावात्तन्निबन्धनभ्रान्त्यभावात् । प्रत्यभिज्ञाया निरवकाशत्वेन बलवत्त्वात्क्षणमात्रमवस्थानं न चैककालीनत्वमस्त्विति वाच्यम् । क्षणिकत्वभङ्गप्रसङ्गादिति भावेन तल्लक्षणमाह ॥ **पूर्वेति** । एवंविधलक्षणे कथमुत्पाद्यसम्बन्धस्य विनाश इत्याशयः । क्षणस्यैवमिष्टत्वादेवायं च दोषः स्यादित्याह ॥ **पूर्वेति** । सति पूर्वस्मिन्विद्यमाने कार्यं भवेच्चेत्तत्कार्यमपि तथा तत्कार्यमपि तथैवेति यौगपद्यं भवेत् । तथा च सव्येतरगोविषाणवत्कार्यकारणत्वाभावः । एकस्मात्कार्योत्पत्तौ च का प्रमा । परानुमानस्य दृष्टान्तः साध्यविकल इत्याह ॥ **अभेदेऽपीति** । दीपादिषु दीर्घह्रस्वत्वादिविशेषदर्शनं तु भेदं विनाऽपि विशेषमात्रेणैव युक्तमित्यनुभवसिद्धं च । दृष्टान्तोऽसम्मत इत्यत आह ॥ **सञ्चेदिति** । न हि खादीनां रूपादिभ्यः कश्चिद्विशेषो विधिप्रत्ययवेद्यत्वमात्र इति भावः । यत्सौत्रान्तिकेनान्यदप्यभ्युपगतं नीलादिरूपेण दृश्यमानं तज्ज्ञानमेवानेनानुमितमन्यज्जगदिति । तन्निरस्यति ॥ **विश्वमिति** । किं न दूषणमिति शेषः । निगमयति ॥ **अत इति** ॥ ७ ॥ वस्तुतोऽनन्तत्वतद्व्यतिरिक्तत्वस्वभावे । **नासतो दृष्टत्वादिति** विवृण्वन्नेति निराकरोति ॥ **नेति** । **उदासीनानामपि चैवं सिद्धिरिति** सूत्रं व्याचष्टे ॥ **यदीति** । इतश्च तन्मतं न युज्यत इत्याह ॥ **देशेति** । प्रलयकालेऽपि सृष्टिः स्यात् । आदिशब्दात्साधननियमोऽपि न स्यात् । तथा च मृद्दण्डचक्रादिभिः पटादिसृष्टिः स्यात् । शून्यस्य कारणस्य सर्वत्रापि निर्विशेषत्वात् । जगदुद्भवः पुरुषेच्छानुसारी वस्तुत्वात्सम्मतवदित्याह ॥ **पुरुषेति** । पुरुषाद्भवः पुरुषेच्छानुसारेण भवः । ननु वस्तुत्वहेतुरसिद्धः । उद्भवधर्मस्य धर्मिवस्तुनो भेदस्यैवाङ्गीकृतत्वादस्माभिरिति नैष दोषः । वस्तुशब्देन पदार्थमात्रस्यैव विवक्षितत्वात् । उद्भवधर्मस्यापि वस्तुत्वाविरोधात् । ननु न ह्यसतः सदुत्पत्तिरस्माभिर्विवक्षिता । विश्वस्याप्यभावरूपत्वादित्याशङ्कां परिहरन् **नाभाव उपलब्धेरिति** सूत्रं व्याख्यति ॥ **सर्वस्यापीति** । विश्वं सदित्युपलभ्यत इति यतोऽनुभूयमानमपि विश्वं न स्यादित्यनुभवविरोधेऽङ्गीक्रियमाणे सति वादिनो वचनं तदर्थश्चानुभूयमानत्वे सत्यपि कुतो

भवेत् । तदभावे विश्वमपि प्रतिपत्त्यैव सत्यं भवेत् । सत्यानुभवस्य गतिं प्रतिवादिनोत्प्रेक्ष्यमाणामनूद्य परिहरन् **वैधर्म्याच्च न स्वप्नादिवदिति** सूत्रं व्याख्याति ॥ **स्वप्नेति** ॥ **किमिति** । कस्माद्धेतोरित्यर्थः । निवर्तत एव ज्ञानादित्यत आह ॥ **अनादेरिति** । तस्या निवृत्तेर्भ्रान्तिकल्पितत्वसम्भवात् । तत्पक्षेऽपि निर्विशेषित्वव्यतिरिक्तत्वात् । तस्याप्रामाण्यगत्या भ्रान्तिकाल्पितत्वसम्भवाच्च । तदेवोपपादयति ॥ **दृष्टस्येति** । प्रमाणदृष्टस्य विश्वस्य भ्रान्तिकल्पितत्वं स्याच्चेत्प्रमाणदृष्टे तद्बाधे प्रत्ययः कुतो भ्रमो न स्यात् । तन्निदर्शनदृष्टान्तेनावस्तुत्वेनार्थान्तरमुपन्यस्यति ॥ **गवामिति** । दृष्टशृङ्गाणां गवामशृङ्गिभावेन सहादृष्टशृङ्गाणां शशानां शृङ्गिता न स्यादित्यसतो जायमानस्य कथं देशकालादिनियम इत्यत आह ॥ **अस्माकमिति** । सविशेषेच्छस्येश्वरस्य प्रसादात् । न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विनेत्युक्तभङ्गिनाऽस्माकं दृष्टत्वं सत्त्वे हेतुः किन्तु मिथ्यात्व एवेत्याशयवतोऽनुमानमनूद्य परिहरति ॥ **दृश्यत्वादिति** । इयं चानुमा मिथ्या न चेत्सत्यायां तस्यां दृश्यत्वहेतोर्वृत्तेर्व्यभिचारो भवेत् । मिथ्यात्वे सत्यपि साधकत्वं किं न स्यादित्यत आह ॥ **साधकत्वमिति** । ननु प्रत्यक्षस्य वर्तमानमात्रग्राहित्वाच्छाश्वतिकं बाधाभावलक्षणं विश्वस्य सत्यत्वं कथं ततः सिध्यतीत्यत आह ॥ **अतीतेति** । दृष्टस्य सत्त्वं साक्षिसिद्धं चेच्छुक्तिरजतादेः सत्त्वस्यापि तथात्वप्रसङ्ग इत्यत आह ॥ **दृढेति** । यदबाध्यत्वेन दृढं दृष्टं तदेव हि दृष्टं नाम । शुक्तिरजतादिकं तु दृष्टवदवभासते परं न तु मुख्यदृष्टम् । इतश्च विश्वस्य शुक्तिरजतादिसाम्यं नास्तीत्याह ॥ **भ्रान्तेरिति** । सविशेष एव हि नः पक्षे विश्वस्य सत्यत्वरूपः । नन्वापाततोऽबाध्यत्वाच्छुक्तिरजतादेर्विश्वस्य विशेषस्तु तत्त्वविज्ञानादेशकालान्तरादिभिः सह बाध्यत्वमेव ह्यस्मत्पक्षे तत्कथं सत्यत्वमित्यत आह ॥ **विज्ञानादिति** । व्यभिचारो बाधः । दृष्टा ह्यनुमा प्रमेत्यत आह ॥ **प्रमेति** । विश्ववदेव विश्वबाधकप्रमायास्तत्साध्यस्य विश्वबाधस्य च बाधः स विरोधो नाम । तथा च विश्वसत्यत्वं निरपवादं सिध्यति । भेद इत्यादेरयमर्थः । यदि भेदो विशेष्यधर्म्यादिग्रहणापेक्षया गृह्यते तर्ह्यन्योन्याश्रयताहेतोर्दुर्ग्राह्यः । तथा हि । घटो भेदेन विशिष्ट इति विशेष्यविशेषण-

ज्ञानापेक्षया भेदज्ञानं विशेष्यविशेषणज्ञानं च भेदज्ञानापेक्षम् । घटात्पटो भिन्न इति धर्मिप्रतियोगिज्ञानापेक्षया भेदज्ञानं धर्मिप्रतियोगिज्ञानं च भेदापेक्षमित्यन्योन्याश्रयत्वात् । गृहीतुमशक्य इति यदुच्यते न तद्युक्तम् । वस्तुनो भेदः स्वरूपमिति । तस्माद्वस्तुनो ग्रहणसमये भेदस्याग्रहो न सम्भवति । अन्यथा वस्तुना सहैव ग्रहणे स्वरूपग्रहणानन्तरमपि घटस्य पटेन भेदोऽस्तीति वक्तुं न युज्यते । तत्र दूषणान्तरमप्याह ॥ **अगृहीत इति** । यदि वस्तुस्वरूपग्रहणेऽपि स्वपरयोरगृहीतो भेदस्तर्ह्यन्यस्माद्भिन्न इति च भेदग्रहः स्यात् । कदा धर्मित्वादीनां ग्रहणमित्यत आह ॥ **धर्मित्वेति** । प्रथमतो घटं दृष्ट्वा पश्चाश्चात्पटाद्घटो भिन्न इति हि धर्मित्वादिग्रहणमित्यत आह ॥ **स्वरूपेणेति** । स्वरूपेण सह सामान्यतो गृहीतो भेद एव घटस्य पटाद्भेदः स्तम्भाद्भेद इत्यादिविशेषा गृह्यन्ते । अन्यत्वं हि भेदो नाम । एवं चान्योन्याश्रयतादोषेण भेददूषकेण स्वव्याघातात् जात्युत्तरकारौ स्वव्याहतिप्रसङ्गो हि जातिर्नाम । **वैधर्म्याच्चेति** सूत्रेण चशब्देनास्य शून्यत्ववादिनो मायिनश्च ॥ ८ ॥ विज्ञानविवर्तवादिनो मतमनुवदति ॥ **ज्ञानमेवेति** । सन्ततिभेदो ज्ञानसन्तत्याख्यानामात्मनां मिथो भेदः । स्वभेदसन्तानिनां ज्ञानानां स्वानां मिथो भेदोऽभेदश्च तेषामेव । स एवाहमिति गम्यमानो नानासंवृतिभूमिषु विविधा ज्ञानस्थानेष्वन्तःकरणेषु प्रतिभासन्ते । एतन्निरस्यति ॥ **न भावोऽनुपलब्धेरिति** व्याचक्षाणः **क्षणिकत्वाच्चेति** सूत्रं विवृणोति ॥ **क्षणिकत्वादिति** ॥ ९ ॥ विश्वं सत्स्यादसत्स्यात्सदसत्स्यात्सदसद्विलक्षणं स्यात्सदसद्विलक्षणाविलक्षणं च स्यादुक्तं सर्वं च न स्यादुक्तं सर्वं च स्यात् । एतत्परिहरन् **नैकस्मिन्न सम्भवादिति** सूत्रं व्याख्याति ॥ **नेति** । यदि विश्वसद्वाददोषनिवृत्त्यर्थमसदात्मना । एवमेव सदसदादिविलक्षणकल्पना सदसदादिदोषपरिहारार्थं समुच्चितकल्पना त्वसमुच्चितदोषपरिहारार्थमित्युच्यते । तर्हि तैः परिजिहीर्षितैर्दोषैरखिलैरपि लिप्यतेऽयमित्युत्तरम् । तदाह ॥ **तत्तदिति** । चलदर्शनश्चञ्चलसिद्धान्तः । सदसत्तया नियमः प्रमाणसिद्धो हि । न चेदं सदसद्विलक्षणमित्यादौ प्रमाणमस्ति । व्याहतं स्वव्याहतम् । अमग्रहोऽप्रमाणग्रहः ॥ **एवञ्चात्मा कात्स्न्र्यम्** । न च **पर्यायादप्यविरोधो**

**विकारादिभ्य** इति व्याख्याति ॥ **वक्ष्तीति** । तत्तस्मादन्यथाभावान्नानित्यता चेतनस्येति शेषः । विशेषलक्षणनिवृत्तावेव विनाशो न तु सङ्कोचविकासादन्यथाभावमात्रादिति दर्शयति ॥ **ओलेति** । नैवं तस्येतीममेवार्थं प्रपञ्चयति ॥ **अन्यथा भाव इति** । तस्य पक्षेऽन्यथाभावमात्रमेवानित्यत्वनिमित्तमीरितम् । तस्य रूपादिमत्त्वयुगेव तथा नाशेन व्याप्तं तया व्याप्त्या चान्यथाभावहेतोश्चात्मनोऽप्यनित्यता भवेत् । भाविसंस्थापगमाभावात्तेषां नित्यत्वप्रसङ्ग इत्य.कूतम् । चेतनस्य न ह्यचेतनस्य शब्दादिज्ञानं स्यात् । तस्माद्वृक्षस्यात्मता न भवेत् ॥ १० ॥ **पत्युरसामञ्जस्यादिति** सूत्रं व्याख्याति ॥ **तच्चेति** । यं कामये तं तमुग्रं कृणोमि । अहं रुद्राय धनुरातनोमि । ब्रह्मद्विषे शरवे हन्त वा उ । अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रिय महित्वं यासिष्टं वर्तिरश्विना विरावदिति श्रुत्यर्थो गुरुभिरुदितः । तत्त्वप्रदीपिकायां यं यमुग्रं कामये तं तमुग्रं कृणोमि । यं यं ब्रह्माणं कामये तं तं ब्रह्माणं करोमीति । इह च तात्पर्यमधिकमवगम्यते । अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिरित्यादरणीयत्ववर्णनात् । रुद्राय हन्तवे धनुरातनोमि । रुद्रं हन्तुमित्यर्थः । शरवे हन्त वा उ इतिवत् । शरुः संहारशीलः । शॄ हिंसायामिति धातोः । विदे हि लेभे । विदलाभ इति धातोः । हविर्भिः प्रभरणे कर्मणा ध्यानेन । स्तुहि श्रुतं गर्तसदं युवानमिति मृळन्न भीममुपहन्तुमुग्रमिति श्रुतिप्रसिद्धम् । हृदयगुहागं सिंहमिव भयङ्करं संहारशीलं स्वभावतोऽपि क्रूरं नरसिंहं स्तुहि । रुद्र सत्तव धनुरादि शिर उत्पिपेषेति रुद्रस्य तु गलावष्टब्धस्य रुद्रस्य धनुषः स्वधनुषः कोटिरेव स्वशिरश्चिच्छिदे । तस्येन्द्रो वर्मरूपेण धनुर्ज्यामच्छिनत्स्वयमिति हि तत्रैवोक्तम् । कुमारश्चित्पितरं वन्दमानं प्रति ननाम । रुद्रोपयन्तं भूरेर्दातारं सत्पतिं गृणीषे इति स्वपितरं वन्दमानं त्वां कुमारः षण्मुखोऽपि प्रतिदिनं ननाम । त्वं तु प्रभूतस्याभीष्टस्य दातारं विष्णुं स्तौषि अद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनामिति त्वया विष्णोः पदमुपमं ज्ञानसमीपे न्यधायीति यत् तेन वेदानां गुह्यं नारायणनाम सत्परम्परायामुपदेशेन पालयसि । मा शिश्नदेवता इत्यादेरर्थस्तु पद्मनाभतीर्थभट्टारकैरभिहितः सन्न्यायरत्ना-

वल्याम्। शिश्नदेवा लिङ्गदेवा भूतभविष्यद्वर्तमानरुद्रा अस्माकमृतं ब्रह्म मागुर्नावगच्छन्नित्यर्थः। स्कान्दे च। न त्वं वेत्सि स वेत्तीन्द्रो नाहं वेद्मि न शङ्करः। वेत्ति पारं महत्त्वस्य हरेरद्भुतकर्मण इति। घ्नश्छिश्नदेवा अभिवर्पसाऽभ्यभूदिति। शिश्नदेवान् रुद्रान् घ्नन्मारयन् वर्पसा तेजसाऽभ्यभूत्परमेश इत्यर्थः। एको नारायण आसीन्न ब्रह्मा न च शङ्कर इति तु स्पष्टार्थम्। स रुष्टः प्रसन्नो यद्रुष्टः स प्रसन्नस्तस्माद्रुद्रः सम्प्रसादावभूतां न ह्यग्र एतावभूतामिति विष्णोः कोपप्रसादजौ रुद्रचतुर्मुखावित्यर्थः। शान्तिपर्वणि च। नमोऽतिशयसे तस्मै देवानां परमात्मने। नारायणाय विश्वाय निर्गुणाय गुणात्मने। यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः। एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ। तदादेशितपन्थानौ सृष्टिसंहारकारकाविति। देवा वै सत्रमासत ऋद्धिपरिमितं यशस्कामास्तेषां वैष्णवं मखं यश आर्च्छेदिति तेषां देवानां मध्ये विष्णुभक्तमच्छिन्ददवाच्यं रुद्रं यशः प्राप्नोत्। यज्ञेन यज्ञमयजन्त देवाः। यज्ञेन रुद्रेण यज्ञं विष्णुं। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्। यो भूतानामधिपतिः रुद्रस्तान्त्रिचरो वृषेति। विष्णवाज्ञाख्यां तन्त्रिं चरतीति तन्त्रिचरो वृषा समर्थः। वृषभरूपश्च स्तेतृत्वादिना स्वातन्त्र्यादीनि प्रतियन्त एक इत्यादिना प्रलये भवः प्रलयावस्थायां स्थूलदेहाभावः। **सम्बन्धानुपपत्तेश्चेति** सूत्रं व्याख्याति॥ **अशरीरत्वत इति**। देहिनो हि कुलालादेरुपादानादिकारणादिज्ञानं दृष्टम्। **करणवच्चेन्न भोगादिभ्य** इति सूत्रं व्याख्याति॥ **न चेति**। **अधिष्ठानानुपपत्तेश्चेति** योजयति॥ **अधिष्ठान इति**। पत्युर्देहभावाभावयोर्दूषणान्तरेऽप्यभिधत्ते। **अन्तवत्त्वमसर्वज्ञता वेति** योजयन्केवलानुमानमूलकं पाशुपतागममेवं दूषयित्वा तत्रोक्तदोषं स्वपक्षे परिहरति॥ **न चैतदिति**। बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे। बुद्धिमान्मनोवानङ्गवान्प्रत्यङ्गवानिति। यदात्मको भगवांस्तदात्मिका व्यक्तिः। किमात्मको भगवाञ्ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक इति। वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः। परो मात्रया तन्वा वावृधान न ते महित्वमन्वश्नुवन्तीत्यादौ रुद्रादीनां भगवन्महिमाप्राप्तिवचनाज्जगत्कर्तृत्वासम्भवः प्रतीयते। ज्ञानज्ञानो नाज्ञानमिश्रज्ञानः।

सुखसुखो न दुःखमिश्रसुख इतीति तत्त्वप्रदपिकायाम् । श्रवणोत्थं प्रियं दर्शनोत्थो मोदः । भोगोत्थः प्रमोदः स्वरूपभूत आनन्दः । तत्तत्प्रवर्तकतया च तत्तद्व्यपदेशः । शिरः प्रियं स्थितं तस्य परेयं प्रियनामकम् । मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् । मोदप्रमोदनामानावानन्दश्चाततत्वतः । मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्यादि बृंहयत् । पृच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा । अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः । देहदेहिवदेवासौ पञ्च ऽवस्थितो हरिरिति यजुः संहितायामिति च । नित्यगुणात्मनो नित्यगुणस्वरूपान्न तु प्राकृतात् । नन्वेकस्य विष्णोर्देहदेहिभावादिकं विरुद्धमित्यत आह ॥ **मानवत्त्वादिति** । ननु शिवस्यापि बहुरूपत्वेन विश्वस्रष्टृत्वं श्रूयते श्वेताश्वतरश्रुतौ । विश्वस्य स्रष्टारमनेकरूपं विश्वस्यैकं परिवेष्टितारम् । ज्ञात्वा शिवं शान्तिमत्यन्तमेतीत्यत आह ॥ **शिवादीति** । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति । यो देवानां नामधा एक एव तं सम्प्रश्नं भुवनायन्त्यन्ये । उक्तः समन्वयश्च सर्वश्रुतीनां विष्णुवाचकत्वे मानम् । अपरे हरावपरवाचिनः शिवादिशब्दा हरौ वर्तन्त इत्यर्थः । लैङ्गादिपुराणानि भागवतेतिहासपुराणादिभिर्विरुद्धत्वात्पाशुपतागमोक्तार्थे प्रमा न कथम् । समबलेषु पुराणेषु लैङ्गादीनां तत्र मानत्वमित्यत आह ॥ **तद्विरुद्धेष्विति** । लैङ्गादीनि रुद्रोत्तमत्ववाचीन्यपि स्वेष्वेव विष्णोः क्वचित्सर्वोत्तमत्ववचनाच्च परस्परविरोधतो भागवताद्युक्तार्थविरुद्धेष्वर्थेषु नो मानं स्युः । शैववैष्णवयोः समब्राह्मविरोधाच्च रुद्रोत्तमत्वस्य विवक्षितोऽर्थोऽवसीयते । वैष्णवादिषु भागवतादिषु देवतान्तरस्य सर्वोत्तमत्वानियमाच्च । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारयेति वचनात्पाशुपतागमस्य मोहार्थमुक्तिश्च । एको विष्णुरेव सर्वगुणान्वितो नान्यः । न चैतावता लैङ्गादीनामप्रामाण्यप्रसङ्गः । तेषु पूर्वपक्षप्राचुर्ये सत्यपि विष्णूत्तमत्व एव तात्पर्यावगमात् । गणेशादीत्यादिशब्दाद्धिरण्यगर्भेश्वरमतम् ॥ ११ ॥ भैरवीत्यादिशब्दान्मायाकुण्डलिनी क्रियेत्यादीनि । **उत्पत्त्यसम्भवादिति** सूत्रं व्याख्याति ॥ **तन्नेति** । **न च कर्तुः करणमिति** सूत्रं व्याख्याति ॥ **तच्चेति** ।

**विज्ञानादिभावे वा तदप्रतिषेध** इति सूत्रं व्याख्याति ॥ **नेति** । द्वयमीश्वर ईश्वरी चेति । तत्पक्षः शिवकर्तृत्वपक्षः । तन्मतं वाममतम् । ज्ञानेष्वेतेषु ज्ञापयन्तीति ज्ञानानि साङ्ख्यादिशास्त्राणि तेष्वेतत्पञ्चरात्रं प्रमाणत्वेन विशिष्यते । एकान्तभावो नियतभक्तिः । कथितो हरिगीतासु समासविधिकल्पितः । एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप । नारदेन तु सम्प्राप्तः सरहस्यः ससङ्ग्रह इति च मोक्षधर्मे । एष धर्मः पञ्चरात्रोदितः । पञ्चरात्रस्य कृत्स्नस्येत्युत्तरवाक्यात् । वेदार्थपूरकं ज्ञेयं पञ्चरात्रं यतोऽखिलम् । तत्सङ्क्षेपश्च गीतेयं तस्मान्नास्याः समं क्वचिदिति ब्रह्मवैवर्ते । ऋषीनुवाच तान्सर्वान् अदृश्यः पुरुषोत्तमः । कृतं शतसहस्राणां श्लोकानां हि तमुत्तममिति शान्तिपर्वणि । श्लोकशब्दोक्तस्य पञ्चरात्रस्य । वेदा इत्यारभ्य इतिहासः पुराणं विद्योपनिषदः श्लोका इति श्रुतौ वचनं चास्ति पञ्चरात्रप्रामाण्यस्थापकम् । ननु वासुदेवात्सङ्कर्षणो नाम जीवो जायते । सङ्कर्षणात्प्रद्युम्नो नाम मनो जायत इति पञ्चरात्रे जीवस्योच्यमानाया उत्पत्तेरसम्भवात्पञ्चरात्रं दूष्यत इत्यत आह ॥ **उत्पत्तिरिति** । तत्र पञ्चरात्रेऽपि जीवस्य घटवद्भूत्वाभावो न कथ्यते । तद्वचः पञ्चरात्रवचः । वासुदेवादित्यादेरभिप्रायमाह ॥ **जीवेति** । वासुदेवात्सङ्कर्षणः सङ्कर्षणात्प्रद्युम्नः प्रद्युम्नाद-निरुद्धः सर्वे एते ह भगवन्तो वासुदेवा इत्यादेरभिप्रायमाह ॥ **एवमिति** । एवमनेन क्रमेण । ननु तत्र भगवान् शाण्डिल्यः षडङ्गं वेदमधीत्य तस्मिन्मह-त्याम्नाये निष्ठामधिगच्छन् यः सर्वपरमधर्मो यस्मान्न भूयोऽस्ति कथं तं विद्यामित्येवं बलवद्विवेकमातिष्ठमानो बभूव । तत्र भगवते शाण्डिल्याय भग-वता सङ्कर्षणेन व्यक्तेन शब्दवच्छास्त्रं प्रोक्तमिति हि पञ्चरात्रे च चतुर्षु वेदेषु परं श्रेयो लब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवानिति च । तस्माद्वेद-विनिन्दकत्वादप्रामाण्यं तस्येत्यत आह ॥ **यदीति** । यदि विद्याच्चतुर्वेदान्साङ्गोपनिषदान्द्विजः । न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यतीत्यत्र यथा पुराणानां वेदार्थज्ञानपू-रणमेवाभिप्रेतम् । तथा पञ्चरात्रादपीति । तस्माच्छाण्डिल्यवर्तने शाण्डिल्यमार्गे पञ्चरात्रे कुतो द्वेषः । ननु न भृशं वदेत् समः

सर्वेषु भूतेष्वित्यादिवचनविरोधान्मुमुक्षोः किमनया परपक्षनिन्दनयेत्याशङ्कापरिहाराय श्रुतिं दर्शयति ॥ **अन्धन्तम इति** । अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रताः । ततो विद्यामविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति । ये विद्यायाꣳ रताः । विद्यायामेव रता न त्वविद्यां निन्दन्ति । भूय इवेति क्रूरत्वज्ञापनार्थम् । अविद्यायाः सदोषत्वेन ज्ञाताया एतामेवातिपीड-कत्वेन मृत्युसंज्ञां तीर्त्वेति भावः । न भृशं वदेदिति सद्विवक्षया । समत्वं तु निन्द्येषु निन्द्यमानेषु मानं नेत्यादिकमेव श्रेष्ठम् । पादं हरेत्तत्र भवेत्पादश्च कर्तरि । पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते । अनेनाश्रेष्ठो भवति मुच्यन्ते सभासदः । एनो गच्छति कर्तारं निन्द्यार्हो यत्र निन्द्यत इत्युद्योगपर्वणि । कर्णौ पिधाय निर्यायदकल्प ईशो धर्मावितर्यघृणिभिर्नृभिरस्यमाने । छिन्द्यात्प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्म इति च भागवते ॥ १२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २—२ ॥ * ॥ * ॥

॥ श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ अथाध्यायशेषेण वचनानामधिभूतादीनामुत्पत्त्यनुत्पत्त्यादिवाचिनां विषयविवेचनेनाविरोधं दर्शयति ॥ **अथेति** । युक्तीर्दर्शयति ॥ **अनुभूतीति** । **न वियदश्रुतेरिति** सूत्रं व्याचष्टे ॥ **प्रकृतिरिति**। इदं ससर्जेत्यादिश्रुतिषु प्रकृत्यादीनां सामान्येन पराधीनविशेषिताजनिमत्त्वं नामोदितम् । अन्यथाऽऽकाशादीनां स्वरूपोत्पत्त्यङ्गीकारे । यद्यनाकाशतेत्यादेरयमर्थः । यदि पूर्वं प्रलये नाकाशतेति केनचिदभ्युपगम्यते । यदि तेनैव मूर्तसम्पूर्णता नाकाशतेति चेष्यते । तत्रावकाशो नास्तीति लोकव्यवहारानुरोधात्तर्हि तत्पक्षे प्रलयकाले मूर्तनिबिडं जगद्भवेत् । किन्त्वस्मिन्नाकाशे बहूनि मूर्तद्रव्याणि स्थितानि सन्ति । तस्मादत्र मूर्तद्रव्यांतरस्य

स्थित्यर्थमवकाशो नास्तीत्येव तस्य व्यवहारस्याभिप्रायो न पुनरवकाश एव नास्तीति । अत्रेत्युक्तत्वात्सामान्यत उक्तामुत्पत्तिं विशिनष्टि ॥ **अत इति** । लवत्रुट्यादिविशेषवान्कालस्तूत्पद्यते । तत्तदा प्रधानं विकृतेरपि प्रधानमपि विकृतेः सृष्टमित्यादि ॥ १ ॥ **एतेन मातरिश्वा व्याख्यात** इति सूत्रं व्याख्याति ॥ **एवमिति** । पूर्वाधिकरणोक्तयुक्तीनामनुकर्षणार्थ एवंशब्दः । ज्ञानस्य नित्यत्वान्नायमन्यवद-नित्यः । शरीरोत्पत्तिकारणान्नापि साक्षान्नित्यः । अतो नित्यसमः । पराधीनविशेषेण शरीराभिमानोत्पत्त्याख्येन । पूर्वं सूक्ष्मत्वेन सतः क्षीरादेर्दध्या-दिस्थूलत्वेन भावः स्थूलताभावः । पूर्वं कुण्डलादिरूपस्य हिरण्मयादेः पश्चात्कटकादिभावेन पूर्वशब्दविलोपस्तद्वशतैव हि । तद्वशता हि व्यक्तिरेव हि ॥ २ ॥ **असम्भवस्तु सतोऽनुपपत्तेरिति** सूत्रं व्याचष्टे ॥ **स्वतन्त्रत्वादिति** ॥ ३ ॥ **व्यतिरेको गन्धवत्तथा च दर्शयतीति** सूत्रं विवृणोति ॥ **अच्छेद्य इयेति** । विभागाय नयति विभागार्थं प्रवर्तयति । इत्यभिधीयते इत्यभिप्रायोऽनेन सूत्रेणाभिधीयते ॥ १३ ॥ परेशस्य सर्वशक्तित्वेन सर्ववैलक्षण्य एव स्थिते सत्यपि केचिन्मूढा अनीशस्य जीवस्य तेनैक्यमाहुः । तद्योऽहं सोऽसौ योऽसौ सोऽहं तत्त्वमसीत्यादिश्रुतिभिर्नेति परिहरति ॥ **पृथगुपदेशादिति** विवृण्वन् भिन्नोऽचिन्त्यः परमोजीवसङ्घादित्यादि पृथगेवाभिधीयते । मुक्तिपर्यंतमेव संसारिणः परमात्मना भेद इत्यत आह ॥ **प्रज्ञेति** । सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं । प्रज्ञानेत्रो लोकः प्रज्ञाप्रतिष्ठा प्रज्ञानं ब्रह्मेति । अलोको लोकाविलक्षणत्वान्मुक्तवर्गो प्रज्ञानेत्रो ब्रह्मनेत्रकः । एतमानन्दमयमात्मानमुपसङ्क्रामतीत्यादि । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते । स तत्र पर्येति जक्षन्क्रीडन्रम-माण इत्याद्याः श्रुतयः । आचक्ष्वेत्याद्यारण्यपर्वणि । आद्यः स्थिरचराणां वेदगर्भः सहर्षिभिः । योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः । भेददृष्टयेत्यादिभागवतवाक्यार्थस्तु गुरुतमैरेवोक्तो भागवतटीकायाम् । अभिमानेन पूर्णज्ञानेन सङ्गत्य लये परमात्मानं प्रविश्य पूर्वं प्रज्ञायते । उच्चनीचा-

दिभावेन जायते । अगुणव्यतिकरे श्वेतद्वीपे निर्गच्छति । गुणव्यतिकराभावेऽप्युच्चनीचादि पूर्ववत् । विष्णोश्चैव विमुक्तानां न कदाचन गच्छतीति गारुड इति । ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विममीत उ त्व इति । मुक्त ब्रह्मणां मध्ये त्व एको ऋचां पोषं मुख्यार्थं पुपुष्मान्सम्यग्व्याख्यानेन पोषितवानास्ते । एको गायत्रं साम गायति । शक्वर्याख्येषु सम्बन्धमेकः । पञ्चरात्रादिजातविद्यां वदति । एको यज्ञस्य मात्रां विष्णो रूपमेव वीक्षते । मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः । चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् । यं यमभिकामो भवति । सङ्कल्पादेवास्य समुत्तिष्ठति । स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । तस्माद्धयेवात्मनो यद्यत्कामयते तत्तत्सृजते । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता । तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति । तद्गुणाः प्रकृतिगुणाः शोकाद्याः । हृदयस्य विष्णोर्भवति । स्वबुद्ध्याऽपीति शेषः । स दुःखाद्विमुक्त आनन्दी भवति । जगद्व्यापारवर्ज्यम् । अथ यदैनं मुक्तोऽनुप्रविशति । मोदते च प्रमोदते च । कामांश्चैवानुभवतीति । स वा एष एतस्मान्मर्त्याद्विमुक्तो चिन्मात्रो भवत्यथ तेनैव रूपेणाभिपश्यत्यभिश्रुणोति । अभिमनुतेऽभिविजानाति तामेतां मुक्तिरित्याचक्षते । इत्यादिमानतः कुत्रचिदभिन्नता कथमेव जीवेशयोः । यदित्यादेरयमर्थः । विश्वस्य सदसद्विलक्षणत्ववादिनो भेदमिथ्यात्वस्य साध्यधर्मस्य सदसद्वादोऽपसिद्धान्तो हि साध्यधर्मः । तदुभयमपि न चेत्तत्पक्षविशेषणमसिद्धम् । सदसद्विलक्षणश्चेदप्रसिद्धविशेषणः पक्ष इत्याकूतम् । न सिद्धं तदित्यस्यान्योऽप्यर्थः । न मिथ्यात्वविशेषणं दृष्टान्तेन सिद्धम् । न हि चन्द्रभेदः सदसद्विलक्षणोऽस्मत्पक्षे । अतः साध्यविकलो दृष्टान्त इत्याशयः । ननु चन्द्रभेदः सदसद्विलक्षणो जडत्वाद्व्यतिरेकेण ब्रह्मवदित्यनुमानेनानिर्वचनीयत्वं साध्यते दृष्टान्तस्येत्यत आह ॥ **अनुमानेन चेदिति** । एतदनुमानस्यापि पक्षस्याप्रसिद्धविशेषणत्वात्तद्विशेषणमनुमानान्तरेण साध्यं तस्यापि तथेत्यनवस्था । ननु नासदासीन्नो सदासीत्तदानीमित्याद्युक्ता । तम आसीदित्युच्यमानमुपपादनं परिशेषात्सदसद्विलक्षणं सिध्यति हीत्यत आह ॥ **नेति** । आनीदवातं स्वधया तदेकमिति परिशिष्टो

ह्यसौ परमात्मा। तदा प्रलये। मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते। मूर्तामूर्ततरद्ब्रह्म म सत्तन्नासदुच्यत इतिवत्। पृथिव्यादिसतो वाय्वाद्यसतश्च वैलक्षण्यमेवात्राभिप्रेतम्। न त्वनिर्वचनीयत्वम्। न हीदं सदसद्विलक्षणमिति कुत्रचित्प्रत्यक्षम्। अथ मतम्। प्रपञ्चो यदीत्यादिश्रुतिबलात्प्रपञ्चस्य बाधोऽङ्गीकर्तव्यः। अन्यथा श्रुत्युदिताद्वैतहानेश्च। असतः ख्यात्ययोगात्सतो बाधायोगात्ख्यातिबाधान्यथाऽनुपपत्त्याऽनिर्वचनीयो भेद इत्यत आह ॥ **न चापत्तिरिति**। बाधायोगात्सत इत्यत्र भेदस्य सत्त्वाङ्गीकारे बाधायोगः प्रसज्यत इत्यभिप्रायः। नायमस्माकमतिप्रसङ्गः। किन्त्विष्टस्य भेदबाध्यत्वस्य प्राप्तिरेव। नन्वनयाऽर्थापत्त्या शुक्तिरजतस्यानिर्वचनीयत्वं साधयामः। त्वयाऽपि भ्रान्तिविषयस्य ख्यातिबाधयोरङ्गीकृतत्वात्। पुनस्तद्दृष्टान्तेन भेदस्यानिर्वचनीयत्वं साधयाम इत्यत आह ॥ **न हीति**। बाधशब्दस्य विनाशार्थमङ्गीकृत्य सतो बाधायोगादिति वदता विवक्षितम्। यत्सत्तन्न नश्यतीति व्याप्तिः कुत्रचित्सम्मता दृश्यते। घटादेः सत एव बाधदर्शनात्। अनिर्वचनीयवादिनः पक्षेऽथ किञ्चिदपि बाधो न घटत इत्यभिप्रायेणाह ॥ **कथंचेति**। न हि कालत्रयेऽप्यसद्विलक्षणमिति वक्तुं प्रयोगत इत्याकूतम्। अत्यन्तासति निरुपाख्यापरपर्याये काचन प्रतीतिर्न सम्भवति किमुत सत्त्वेन प्रतीतिरित्याशयेनासतः ख्यात्ययोगादित्युच्यमानं निरस्यति ॥ **प्रतीतिरिति**। सदृशादर्शननिमित्तकं ज्ञानं ह्युपमा प्रमाणम्। कुत्राप्यनिर्वचनीयदर्शनात्तदपि नास्ति भेदोऽनिर्वचनीय इत्याह ॥ **न चोपमेति**। घटात्पटो भिन्न इति प्रत्यक्षाद्भेदस्य सत्यत्वमेवावगम्यते च। तस्माद्भेदमिथ्यात्वानुमानं प्रत्यक्षविरोधेन कालात्ययापदिष्टश्चेत्यर्थः। शास्त्रेत्युक्तमेवोपपादयति ॥ **किञ्चेदिति**। अनुभूयते चात्मनेति शेषः। यः सर्वज्ञः सर्ववित्। सर्वैर्युक्ता शक्तिभिर्देवता सेति श्रुतिः। यद्यस्यानन्ययोगेन प्रथमग्राहकं तद्धि तत्रोपजीव्यप्रमाणम्। तच्चेश्वरे श्रुतिरात्मन्यनुभूतिः। यदा यदि हि तर्हि। ननु यः सर्वज्ञः स सर्वविदित्यादिवाक्यं धर्मिणो ब्रह्मणः स्वरूपमात्र एव प्रमाणं न तु सर्वज्ञत्वादिधर्मे। तस्य भेदापादकत्वेन हेयत्वात्। तस्मान्नोपजीव्यप्रमाणविरोध इत्यत आह

॥ **यदिति** । एकेत्यादेरयमर्थः । परमात्मा सर्वज्ञ इत्येकविज्ञानेन हि धर्मिस्वरूपं धर्माश्च ज्ञायन्ते । अस्य विज्ञानस्यावयव भेद एव विद्यते न तु स्वरूपभेदः । तस्मात्तद्द्वयमपि मानासिद्धं भवेत् । विशब्दस्तस्य ज्ञानबाध्यविषयत्वद्योतकः । तयोः स्वरूपमात्रसर्वज्ञत्वादिधर्मयोर्मध्ये एकं स्वरूपमात्रं प्रामाणिकम् । न चेत्तद्द्वयमप्यप्रामाणिकं नो भवेत् । न चाभेदागमः क्वचिद्भेदश्रुतेरुपजीव्यः । तस्याः प्रत्यक्षाद्यानुकूल्येन बलिष्ठत्वात् । ननु विमतमुपादानाद्यपरोक्षवित्कर्तृकं कार्यत्वाद्घटवदित्यनुमयैवेशो ज्ञायत इत्यत आह ॥ **सर्वज्ञेति** । अनेनेति सामान्यत उक्तमेवात्र विशेषितम् । ननु यदुक्तमैक्यश्रुतेरुपजीव्यप्रमाणविरुद्धत्वं तन्नास्ति । दुःखाद्यनुभवस्य भ्रमत्वादित्यत आह ॥ **न दुःखेति** । आदिशब्दादिच्छादयः । तरति शोकमात्मविदित्यदुःखिता श्रुतिर्मानेन श्रोत्रप्रत्यक्षाख्येन तच्छ्रोत्रप्रत्यक्षत्वं तया मानत्वेन गृहीतं चेद्दुःखानुभवे साक्षिप्रत्यक्षे कस्माद्भ्रमत्वं गृह्यते । तद्दुःखमनुभूयमानस्य दुःखादेः केनचिन्मानाभावेन बाधाङ्गीकारेऽतिप्रसङ्गमाह ॥ **बाध इति** । तदेव प्रपञ्चयति ॥ **कोऽपीति** । शुक्तिरजतादिज्ञानस्य भ्रमत्वं घटादिज्ञानस्याभ्रमत्वं चानुभवगम्यमिति यत्तस्मात्साक्ष्यनुभवस्याव्यभिचारित्वाद्भ्रमत्वेनानुभवसिद्धयोर्धर्मयोर्मध्ये एकस्यात्मदुःखानुभवस्य भ्रमता परस्य निर्दुःखत्वश्रुतिश्रवणस्याभ्रमता कुतः कल्प्यते । क्वचिद्दुःखानुभवादौ विशेषा ज्ञानेच्छासुखदुःखादयः प्रत्यक्षादिप्रमाणानां प्रामाण्यग्राहिणः । साक्ष्याख्यप्रमाणान्निश्चयवान्हानोपादानादिव्यवहारोऽखिलोऽप्यभिधीयते । प्रामाण्यानिश्चये कथं व्यवहारः प्रवर्तते । साक्षी तु स्वयमेव स्वप्रमाण्यं निश्चिनोति । स्वयंप्रकाशत्वात् । एवं व्यवहारान्यथाऽनुपपत्तितर्केण साक्षिनिर्दोषत्वमङ्गीकार्यमित्याह ॥ **तस्मादिति** । प्रकृतमुपसंहरति ॥ **उपजीव्येति** । **तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदिति** योजयन् अभेदवाक्यानां गतिं दर्शयति ॥ **तथाऽपीति** । इत्यादीनि पौराणानि वाक्यानि । अस्ति हि सिंहो देवदत्त इत्याद्यभेदव्यपदेशः । देवदत्तस्य वीर्यादिगुणैः सिंहसादृश्यात् । मुक्तस्य तु क्षीराब्ध्यादिस्थिततद्रूपापेक्षया स्थानैक्यं विशिष्यते । निर्दुःखत्वाल्म्बुद्धिगोचरसुखवत्त्वादिसादृश्यं च । जडानामीशप्रधानकत्वमीशतन्त्रत्वं चेति द्वयमेव तद्भेदव्यवहारनिमित्तम् ।

सत्तादिसादृश्यमत्यल्पम्। ईशस्य धर्मानाशात्। ईशस्य धर्मानीशाद्भेदेन पश्यतो दुःखे प्रमाणमाह ॥ **यथेति।** पर्वते दुर्गस्थले शिखरे वृष्टमुदकं यथाऽधो धावति। एवं भगवतो धर्मान्भेदेन पश्यन्पुरुषस्तान्दृष्ट्वाऽन्वेव विपरीतत्वेन धावति। दर्शनानन्तरमेव नरकं प्रति धावतीत्यर्थः। भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः। समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा। तद्भेदेऽप्येकशब्दो यतोऽवयविनि स्थितः। एकमेवेत्यतः प्राह नारायणमियं श्रुतिः। समेऽद्वितीयशब्दः स्यादद्वितीयोऽसमत्वतः। अधिकः कुत एव स्यादित्याह परमा श्रुतिरिति सामसंहितायाम्। इह ब्रह्मणि किञ्च नाना नास्ति। स्वगुणावयवादिभेदानामेकतमोऽपि नास्ति। इत्याकूतम्। य इह नानेव पश्यति। योऽभेदं भेदाख्यमुभयं वा पश्यति मृत्योः स मृत्युमाप्नोति। मृत्युशब्देन मरणवाचिनाऽधिकदुःखं लभ्यते। अधिकदुःखादधिकदुःखमन्धन्तमः समाप्नोतीत्यर्थः। तस्माद्ब्रह्मणि कस्माच्चिदपि वस्तुनो भेदाभेदौ न द्रष्टव्यौ। स्वगुणादिभिरभेद एव जीवादिभ्यो भेद एव ॥ १४ ॥ यस्तु जीवादिभिः परमेश्वरस्य भेदाभेदौ पश्यति तत्पक्षनिग्रहोऽपि प्राप्तः। प्रज्ञानेत्र इत्यादिना भेदस्य मुक्तौ वचनादित्याह ॥ **भेदस्येति।** चेतनत्वादित्यादिशब्दात्सत्यम्। अत्र प्रमाणमाह ॥ **नेति।** विष्णोः समुदायेन भेदाभेदौ न ह्येकस्यैव समुदायत्वम्। स्वगुणादिभिरभेदः। अभेदश्रुतीनां गत्युक्तिमुखे**नांशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एक** इत्यस्यार्थं सूचयति ॥ **अभेदेति।** उक्तं च तत्त्वदीपिकायाम्। अंशिनो यत्तु सामर्थ्यं जगत्सृष्ट्यादौ यत्स्वरूपं ज्ञानानन्दादि या स्थितिर्देशतः कालतो व्याप्तत्वेनेति। **प्रकाशादिवन्नैवं पर** इति सूत्रं व्याख्याति ॥ **सूर्येति।** परमांशत्वेऽपि संसारी परमात्पृथक्। **अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवदिति** सूत्रं व्याख्याति ॥ **देहेति।** अपरैर्न च। अपूर्णशक्तिजीवांशैर्मुख्याभेदो नास्ति च। **अनेनासन्ततेश्चाव्यतिकर** इत्यस्यार्थः सूच्यते। **आभास एव चेति** सूत्रं व्याख्याति ॥ **अंशेति।** तत्र प्रमाणमाह ॥ **यथेति।** यथैषा पुरुषस्य छाया तथैवैतस्मिन्परमात्मन्याततमेतज्जीवजातम्। परमात्मनः

छायाप्रतिबिम्बभूतमित्यर्थः । एते जीवाः परमात्मनः पादा अपि पुरुषपादवदभिन्ना न किन्त्वत्यन्तभिन्ना एकदेशपरिमिताश्च । व्यासनरसिंहप्रादुर्भावतया स्थितास्तु तस्य परमात्मनो ज्ञानवीर्यादिगुणा एव । तथाऽपि प्रत्येकं सर्वगुणपूर्णाश्च । एतत्पादार्थं सङ्क्षेपेणाह ॥ **अक्षयेति** । ब्रह्ममुख्यप्राणयोर्देव्यौ प्रकृत्यभिमानिन्यौ च जाते । तेषां ब्रह्मादीनामिमे जन्मादयो धर्माः सदा तदधीनाः । एतेषां मोक्षानन्तरं च तदधीनत्वं न हीयते ॥ १८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥ २—३ ॥ * ॥ * ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ पादसङ्गतिं दर्शयति ॥ **श्रुत्यर्थे इति** । विरुद्ध इव न तु विरुद्धः । पूर्वपक्षयुक्तीः सिद्धान्तयुक्तीश्च दर्शयति ॥ **दृष्टेति** ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां नयचन्द्रिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥ २—४ ॥ समाप्तोऽयमध्यायः ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥ * ॥ * ॥



श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ अस्मिन्पादे पूर्वपक्षयुक्तीर्दर्शयति ॥ **स्वाभाविकेति** । सिद्धान्तयुक्तीर्दर्शयति ॥ **गुणाधिक्येति** । **रेतःसिग्योगोऽथे**त्यत्राथशब्दस्य कृत्यमाह ॥ **बीजेति** । दिवःस्थास्नूनगच्छति स्थास्नुभ्यः पितरं पितुर्मातरमित्युक्तस्य बीजपुरुषयोनीनां सङ्गतिनियमस्योज्झितिमाह । कारणतो भगवत्प्रसादातिरेकतो विशेषकारणादेव विशेषाज्जनिरुच्यते । सामान्यजननं चैव नृणां सामान्यहेतुत इति वचनात् ॥२०॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां नयचन्द्रिकायां तृतीयाध्यायस्य प्रथमः पादः ॥ ३—१ ॥ * ॥ * ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ अत्र पूर्वपक्षयुक्तीर्दर्शयति ॥ **पश्चाददृष्टेति** । सिद्धांतयुक्तीरपि दर्शयति ॥ **अशक्येति** । **सन्ध्ये सृष्टिराह हीति** सूत्रं व्याख्याति ॥ **वासना इति** । मुद्रामुद्रितप्रतिमुद्रान्यायेनान्तःप्रविष्टपदार्थाकारा वासना यदा तत्र । यदि तन्मनो नास्ति । जाग्रत्त्वं जाग्रत्त्वप्रतीतिः । विषयेऽननुभूते सति तत्संस्कारो नोत्पद्यत इत्यत्र प्रमाणमाह ॥ **अदृष्ट इति** । नन्वकिञ्चनेन कदाचिदप्यश्रुतमदृष्टं राजभोगादिकं स्वप्ने दृश्यते हि । तस्मात्कथमेषा श्रुतिपुराणोक्तिर्युज्यत इत्यत आह ॥ **अनादित्वादिति** । अनादिकालजन्मसु कुत्रचिद्राजभोगादेरपि दृष्टिश्रुतिसम्भवादनादिमनसि तद्वासना स्यादिति भावः । कदाचिदित्यादेरयमर्थ उच्यते । यत्कदाचिद्दर्शनायोग्यं शशविषाणादिकं स्वप्ने दृश्यते तदपि जागरिते विभागतो दृष्टमेव हि समदेशकालतया दृश्यते । स समानाधिकरणप्रत्ययो भ्रमश्च दृष्टो हि । जागरिते घटस्तद्विभागेन कस्यचिद्विषाणं च । **मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति सूत्रं** व्याख्याति ॥ **वासनेति** । स्वप्नद्रष्टुर्भेदे तद्भेदस्य भेदान्तरापेक्षयाऽनवस्थितिः । अभेदे स्वप्नबाधे द्रष्टुरपि बाधप्रसङ्गः । भेदाभेदे स्वव्याहतिः । तस्माद्भिन्नाभिन्नाभ्यामनिर्वाच्यत्वमङ्गीकर्तव्यम् । अत एवानिर्वाच्याविद्यामयः स्वप्न इत्येतत्सूत्राभिप्राय इति विवक्षया विकल्पयते । विकल्पमनूद्य दूषयति ॥ **भेद इति** । न हि दृष्टभेदयोः

स्थाणुपुरुषयोर्भेदादिप्रश्नो युज्यते । वन्ध्या पुत्रवती न वेति प्रश्नस्य स्वव्याहतिदोषः । ब्रह्मानन्तगुणमित्युक्ते चेतनानां तारतम्ये किं प्रमाणमित्यस्याऽसङ्गतिः । प्रत्यक्षतो निश्चितभेदयोः स्थाणुपुरुषयोर्भेदोऽस्ति न वेत्यस्य सिद्धार्थतामित्येतत्पर्वततृणानीत्यस्य वैफल्यम् । परिहारेऽपीत्यादेरयमर्थः । प्रश्नपरिहाररूपेऽनुमानेऽपि । प्रतिज्ञायां तु प्रतिवादिनः सिद्धत्वं दूषणम् । तदन्यस्य हेतोर्दृष्टान्तस्य चोभयवादिसिद्धत्वेन व्याप्तिमतोऽपि हेतोर्यदन्यैः कारणान्तरेणाऽसाधकत्वमुच्यते तन्निराकरोति ॥ **आश्रयेति** । ननु नृशृङ्गमस्ति शृङ्गत्वाद्गोशृङ्गवदित्यादिराश्रयाभावाद्व्यप्रमाणमित्यत आह ॥ **दोष इति** । नृशृङ्गं नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वाद्वैधर्म्येण घटवदित्यादौ यत्र प्रत्यक्षादिव्याहतता नास्ति तादृशस्यार्थस्य साधने कोऽतिप्रसङ्गः । कथमनुमानस्य स्वयमेव प्रमाणस्य प्रत्यक्षादिविरोधे दौर्बल्यमित्याकाङ्क्षायामाह ॥ **प्रत्यक्षेति** । अमूलाः प्रत्यक्षागमाख्यमूलरहिता न्यायाभासाः स्युः । अन्यस्य न्यायस्य क्वचिद्युक्तेर्मूलभूतस्य न्यायस्य पुनरपि तौ प्रत्यक्षागमावेव मूलं स्याताम् । तथा हि । परचक्षुष्मत्तानुमानस्य रूपज्ञत्वाख्ययुक्तिर्हि ज्ञापयति । विमतो रूपज्ञोऽश्रुतरूपविशेषस्य व्यवहर्तृत्वात्सम्मतवदिति । एवमनुमानमूलस्यास्यानुमानस्य रूपविशेषव्यवहारश्रवणाख्यं श्रोतृप्रत्यक्षं मूलम् । नन्वेवमनुमानस्य दुर्बलत्वात्प्रत्यक्षस्यापि क्वचिदाभासत्वदर्शनात्कथं प्रामाण्यनिर्णय इत्यत आह ॥ **अदृष्ट इति** । अनुमानस्य शुक्तिरजतादिप्रत्यक्षादेर्मानत्वं तु मानसप्रत्यक्षमात्रसिद्धत्वाद्बाध्यं भवेत् । साक्षिगृहीतस्यैव ह्यबाध्यत्वनियम इत्याशयः । यदुत्सर्गतः स्वभावतः प्राप्तं परीक्षां विनैव तदप्यपवादविवक्षितम् । साक्षिसम्मत्याऽभिमानमेव भवेत् । किमुत परीक्षाप्राप्तम् । उक्तार्थमेव सोदाहरणं स्पष्टयति ॥ **अत इति** । यद्यद्भोजनं तत्तदिष्टसाधनमिति व्याप्तावपि क्वचिदपथ्यभोजनस्यानिष्टसाधनत्वाद्व्यभिचारो हि । न च तावता नित्यभोजनादिव्यवहारभङ्गः । एवं च नित्यव्यवहारान्यथाऽनुपपत्त्या प्रमाणानां प्रामाण्यग्राहकः साक्ष्यङ्गीकर्तव्यः । व्याप्तत्व इत्यादेरयमर्थः । हेतोः साध्येन व्याप्तत्वे सति साध्याश्रयाद्भिन्नाश्रयत्वं कथमेव हि दूषणम् । ननु विश्वं सदसद्विलक्षणमिति पक्षोऽप्रसिद्धविशेषणत्वेन हि दूष्यते । तस्मात्कथमन्यत्रासिद्धसाधनत्वं

दूषणम् । नेत्यत आह ॥ **अन्यदिति** । सदसद्विलक्षणत्वमसद्विलक्षणत्वविरोधि । सद्विलक्षणस्यासद्विलक्षणत्वनियमात् । असद्विलक्षणत्वं सद्विलक्षणविरोधि । असद्विलक्षणस्य सत्त्वनियमादिति स्वव्याहतेः । अनुमानमप्रामाणिकम् । सर्वकार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वाद्व्यतिरेकेणात्मवदिति तैर्नैयायिकादिभिश्च तत्राप्रसिद्धे सर्ववित्पूर्वत्वे कर्तृकत्वे कादाचित्कत्वहेतोर्व्याप्तिर्गम्यते । ननु विमतं सकर्तृकं कार्यत्वाद्घटवदिति कार्यत्वहेतोः सिद्धे सकर्तृकत्वमात्र एव वृत्तिः । पुनः पक्षधर्मताबलेन सर्वज्ञत्वं साध्यत इत्यत आह ॥ **अप्रासिद्धस्येति** । यदा यदि । अणुपरिमाणतारतम्यविश्रान्त्यन्यथाऽनुपपत्तेः परमाणवो केचन सन्तीति यथानुभवमेव कुतो नाङ्गीकार्यम् । यत्रासिद्धादिसाधनेऽतिप्रसङ्गो नास्ति तद्विपरीतार्थकमपि मानं च नास्ति । तत्राप्यणुपरिमाणतारतम्यं क्वचिद्विश्रान्तमित्यादिरूपेण क्लिष्टकल्पनयैव साध्यमित्यतिदुर्वचः । प्रमाणबाह्यत्वात् । इतश्चासिद्धसाधनदूषणं परैः कल्पितोऽवयवनियमश्च न घटत इत्याह ॥ **परिशेष इति** । उक्तं च सन्न्यायरत्नावल्याम् । भोक्तृत्वस्याचेतनधर्मनिषेधे परिशेषलक्षणानुमानाच्चेतनधर्मत्वमन्यत्राप्रासिद्धं सिध्यति । अज्ञानस्य भ्रमनिबन्धनत्वेऽज्ञानभ्रमयोः परस्पराश्रयलक्षणनिराकरणतर्कात्तयोरसिद्धिरन्यत्राप्रसिद्धा सिद्ध्यति । अज्ञानस्याज्ञानकल्पितत्वे आत्माश्रयता । तर्केणाज्ञाननिराकृतिश्च । आदिशब्दादनवस्थायाः । हेतोः सिद्धसाधनतायां च वीतरागकथावसतिर्न भवेत् । यथा जगन्मिथ्यात्वे प्रयुक्तस्य दृश्यत्वहेतोरात्मनि व्यभिचारः । यथा वा तार्किकेण वेदानित्यत्वे प्रयुक्तस्य कृतकत्वहेतोरसिद्धिः । दृष्टान्तस्य दूषणं तु साध्यसाधनवैकल्यम् । यथा शुक्तिरजतदृष्टान्तस्य सदसद्विलक्षणत्वाभावात्साध्यवैकल्यम् । विनाशित्वहेतुना विश्वबाध्यत्वसाधने शुक्तिरजतस्य साधनवैकल्यं हेत्वादीनां विशेषणे वैयर्थ्यं च दूषणम् । विशेष्यविशेषयोरेकतरस्य व्यर्थत्वेनासिद्धौ तत्समुच्चयरूपस्य विशिष्टस्यासिद्धिरेव । यथा विशालत्वे सति धूमवत्त्वादिति व्यर्थविशेषणासिद्धिः । धूमवत्त्वे सति विशालत्वादिति विशेष्यासिद्धिः । तत्र तेषां प्रश्नदोषाणां मध्येऽप्रयोजकता प्रथमप्रश्नस्यैव दूषणम् । चरमप्रश्नानां तु विकल्पत्वे सति पूर्वत्रासङ्गतत्वेनासङ्गतिदोष एव । सिद्धप्रश्नादिकमित्या-

दिशब्दात्सिद्धसाधनव्यर्थविशेषणादीनि । केचिदर्थापत्त्यादीन्यनुमानादेः पृथक् प्रमाणान्यभ्युपगच्छन्ति । तन्निरस्यति ॥ **अर्थापत्तीति** । लिङ्गस्य दृष्टस्य श्रुतस्य वाऽन्यथाऽनुपपत्त्या लिङ्गिनोऽर्थत आपत्तिरेवार्थापत्तिः । यथा जीवन्देवदत्तो गृहाभावान्यथाऽनुपपत्त्या बहिरस्तीति । एतद्गतसादृश्य-प्रतियोगित्वादेतेन सदृशं तदित्युपमानम् । यथा गोसदृशगवयदर्शनाद्गवयसदृशो गौरिति ज्ञानम् । प्रमाणाभावलिङ्गकं प्रमेयाभावज्ञानं ह्यभावप्रमाणम् । एतेऽनुमानान्तर्भूताः । तथा हि । देवदत्तो बहिरस्ति जीवित्वे सति गृहाभावित्वात् । स गौरेतद्गवयसदृशोऽस्य गवयस्य तद्गोसदृशत्वात् । यो यत्स-दृशः स तत्सदृशो यथा भ्राता । विमतः सर्षपोऽत्र नास्ति । योग्यत्वे सत्यनुपलभ्यमानत्वात् यथा पर्वत इति क्वचिल्लिङ्गापेक्षया झटित्युत्पद्यमानं घटाद्यभावज्ञानं प्रत्यक्षान्तर्भूतम् । सुखदुःखादेरभावज्ञानं नियमेन प्रत्यक्ष एवान्तर्भूतम् । साक्षिज्ञानत्वात् । उपक्रमाद्याश्चानुमानान्तर्भूता इत्याह ॥ **प्रारम्भाद्या इति** । उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इति च बृहत्संहितायाम् । आत्मा वा इदमेक एवाग्र आसीदित्युपक्रमादस्मिन्नागमे परमात्मा प्रतिपाद्यत इत्यादिरूपेणागमार्थनिश्चयः । नमो विष्णवे महते करोमीत्युपसंहारः । असकृ-दुक्तिरभ्यासः । यथा ब्रह्मविदाप्नोति परम् । येऽन्नं ब्रह्मोपासते । ये प्राणं ब्रह्मोपासत इत्यादि । प्रमाणान्तरागम्यत्वमपूर्वता । तद्यदा स्त्रियं सिञ्चति । अथैनं जनयति । तदस्य प्रथमं जन्म । यदि कुमारं जन्मनोऽग्रेद्धि ह्रापयतीत्युक्त्वा तदस्य द्वीतीयं जन्म स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्मेत्यभ्यासतो जीवस्य वाच्यत्वप्रतीतावपि तस्य प्रत्यक्षादिगम्यत्वेन सुपूर्वत्वात्तमपहायापूर्वत्वाज्ज्ञायमानजीवान्तर्यामिणि परमात्मनि तात्पर्यमवसीयतेति ज्ञानस्य फलम् । यथा द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽ-भिचाकशीतीत्यत्र पक्षिज्ञानस्याफलत्वात्तद्वाचकत्वं नाङ्गीक्रियते । सफलत्वाज्जीवेश्वरज्ञानस्य तद्वाचकत्वमभ्युपगम्यते । यदर्थमन्यस्यार्थस्य वादः स तदर्थवादः । यथा परमात्मनः सर्वोत्तमत्वज्ञापनार्थं स इमाँल्लोकानसृजतेत्यादिसृष्टिकथनम् । अन्यत्रासम्भाव्यलिङ्गमुपपत्तिः । यथा विश्वस्मादिन्द्र

उत्तर: । नकिरिन्द्र त्वदुत्तरो नज्यायानस्ति वृत्रहन् नकिरेव यथा त्वमित्यादौ समाधिकरहितत्वादिन्द्रो विष्णुः । पराहीन्द्र धावसी वृषा कवेरतीव्यथीरितीन्द्रस्य विष्णोः पराजितत्ववचनेन समाधिकराहित्यासम्भवात् । श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् । पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा । एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते । अन्यत्र तत्समोक्तिश्च समाख्यास्थानमेव च । अध्यायादिप्रबन्धस्तु प्रभेदा आगमस्य चेति वचनाद्वाक्यादीन्यवगम्यते । अवस्वरातिगर्गरोपरिसनिष्वणत् । पिङ्गापरि च निष्कददिन्द्राय ब्रह्मोद्योतमित्यत्र पृथगन्वयाङ्गीकारे एकवाक्यत्वानुपपत्त्येन्द्रायाभीष्टदानार्थमुद्यतं ब्रह्मगर्गरोऽवस्वरातीत्याद्यन्वयोऽङ्गीकर्तव्यः । इति वाक्यस्य लिङ्गिभावः । नन्वनुपसञ्जातविरोधित्वेनात्मोपक्रमस्याप्यात्मनोऽन्यत्रासम्भाव्यलिङ्गत्वमस्ति । एवमेवोपसंहारादीनां च । तस्मात्ततस्तेषामुपपत्तेः पृथग्वच इत्यत आह ॥ **कुरुपाण्डववदिति** । सन्तानबीजं कुरुपाण्डवानामित्यादौ कुरुभ्यः पाण्डवानां पृथग्वचनेऽप्यकुरुत्वं न स्याद्धि । सामान्यविशेषभावे तथावचनसम्भवात् । स्यात्किम् । भेदमिथ्यात्वानुमानमप्रसिद्धविशेषणमिति निरस्तं हि पुरस्तात् । अत्र तु तस्यादोषत्वान्नापसिद्धान्तः किं न स्यादित्यत आह ॥ **स्वन्यायैरिति** । केवलानुमानस्येश्वरसाधकत्वाङ्गीकारे केवलानुमानेनैव तस्यानीश्वरप्रसङ्ग इति प्रसङ्गार्थतया प्रोक्तोऽर्थाव्यभिचारादिरूपो विरोध उक्तः । विरोधान्तरमप्यस्तीत्याह ॥ **छलमिति** । तयोरुदाहरणं भगवत्तमेनैवान्यत्रोक्तत्वात् । जातिर्न मेये मानापेक्षेत्यादि । का मेये मानापेक्षाऽस्तीति च । तेनैव न्यायेन सिद्धत्वाच्छलमसङ्गतम् । अन्यच्च । गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविक्षया न शक्यमितिवदिति । ननु तत्र छलस्यासङ्गतत्वमुक्तं हि । कथमत्र विरोधेऽन्तर्भाव उक्त इति नैष दोषः । तुलायाः प्रमाणत्वप्रमेयत्ववदुभयत्राप्यन्तर्भावसम्भवात् । न घटते पृथिवीनयनमिति छलवादिनोक्ते सति केन पृथिव्या अचेतनाया नेत्रं घटत इत्युक्तमनुक्तोपालम्भो यदिति छलवादिनः स्वोक्तन्यायेनैव वादिना व्याहतत्वाद्विरोधान्तर्भावो दृश्यते हि । सदसद्विलक्षणस्यार्थतः सदसत्त्वात् सदसत्त्वस्य चैकत्र स्वव्याहतत्वाद्व्याहतमेतत् । इतश्च तन्न घटत इत्याह

॥ **प्रतियोगित्वमिति** । अस्य सदसद्विलक्षणस्य प्रतियोगित्वं ब्रह्मणोऽङ्गीकृतं हि । तेन ततो ब्रह्मणो न विशेषत्वप्रसङ्गः । ततो ब्रह्मणो जगद्विलक्षणं चेज्जगद्वद्ब्रह्मणो मिथ्यात्वं ब्रह्मवज्जगतः सत्त्वं वा स्यात् । तदेवोपपादयति ॥ **इदमिति** । अस्य ब्रह्मण इत्थंभावात्मको धर्मो न चेत्प्रतियोगिताऽपि न स्यात् । तदभावे दोष उक्तः । **अदृश्यत्वादिगुणको धर्मोक्ते**रित्यस्याभावरूपा अपि गुणा अत्युद्धुताः । किमु सर्वज्ञत्वादिभावधर्मा इत्याशयः । **सर्वधर्मोपपत्ते**रित्यादावुदिता हि ते । सर्वमपेक्ष्य सर्वज्ञत्वसर्वस्रष्टृत्वादयस्तस्मादन्यापेक्षा स्युष्ट इति । स्युष्टे सत्या इहाशिष इतिवत् । ननु निषेद्धुमेव धर्माननुवदति वेदः तस्मात्कथमप्रमाणतेत्यत आह ॥ **अप्रामाणमिति** । ब्रह्मात्म्यैक्यस्य कथं मिथ्यात्वं न स्यात् । तस्यापि वेदेनैव हि वेद्यत्वं स्यात्किं न ब्रह्मणः । सर्वज्ञत्वादीनामत्यन्तासत्त्वमभ्युपगच्छामः । व्यावहारिकसत्यत्वाङ्गीकारात् । तत्तद्द्विधातुर्वेदस्यातत्त्ववेदकप्रमाणत्वं स्यात् । न चैतवता ब्रह्मणः सविशेषत्वं । तेषां धर्माणामारोपितत्वादित्यत आह ॥ **धर्मेति** । अपरोक्षस्येदन्त्वधर्मित्वे परोक्षस्य तत्त्वधर्मित्वे उभयस्यापि धावल्यादिविशेषधर्मित्वे च सति ह्यत्र शुक्त्यादावन्यो रजतत्वधर्मः कल्प्यते । तदर्थं धर्मारोपार्थं भ्रान्तिविषयत्वम् । उपपन्नश्च तस्य दृश्यत्वानुमानादेरन्यथाभावः । बहुप्रमाणविरुद्धत्वात् । एवमीशदेवमुन्यादिकं विश्वसत्यत्वादिभ्रान्तिमत्कल्प्यते । सा भ्रान्तिस्तस्यैव न किन्तु तदेवोपपादयति भवेत्सूक्तिरिति । भ्रान्तं भ्रान्तिकल्पितम् । तर्ह्यैक्यागमस्य प्रामाण्यं प्रत्यक्षादन्यतः कुतोऽङ्गीक्रियते । प्रत्येक्षेणैव चेत्तस्यापि जगत्प्रत्यक्षवदप्रामाण्यप्रसङ्गः स्यात् । किं यावद्विश्वनिवृत्तिप्रत्यक्षमपि प्रमाणमेव । तेनैक्यागमस्यापि प्रामाण्यं गृह्यत इत्यत आह ॥ **तात्कालिकमिति** । तस्याप्येतादृशं यदि तर्हि यदैक्यागमप्रामाण्यस्य मिथ्यात्वं तदा विश्वसत्यतापत्तिः । अद्वैतहानिसामान्यात् । ऐक्यवाक्यमानत्वस्य ब्रह्मव्यतिरिक्तस्याबाध्यस्यैवाङ्गीकारात् । तत्पक्षेऽप्यद्वैतहानेः समत्वात् । प्रत्यक्षादेरयथार्थत्वे प्रामाण्यमेवाङ्गीकर्तुं न शक्यते । किमुत स्वतःप्रामाण्यमित्यभिप्रायेणाह ॥ **यदीति** । प्रामाण्यस्य कालतो मर्यादा नाम याव

द्विश्वनिवृत्तिप्रमाणं ततः परमप्रमाणमिति हि सा व्याहता। न हि कालत्रयेप्यप्रमाणमितिबाधकज्ञानग्राह्यस्य कदाचित्प्रामाण्यं युक्तम् । ननु सत्यमेवं द्वैतप्रामाण्यस्य तत्त्वतोऽप्रामाण्यमस्तु। बाध्यते हीदं मिथ्यात्वमानेनेत्यत आह ॥ **मिथ्यात्वेति**। तथा कालेऽपि विकल्पविषयं मुक्तिकालेऽप्यस्ति न वा। अस्ति चेद्द्वैतापत्तिः। नास्ति चेन्मुक्त्यभावः। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति। तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीत्यागमः। कालनिवर्तने मुक्तेरपि निवृत्तिः स्यात्। तस्याः शाश्वतित्वाभावात्। न च कालस्य कालत्रयवर्तित्वाभावापरपर्यायो बाधो घटते। स्वव्याहतत्वात्। इतश्च विश्वसत्यत्वप्रत्यक्षापलापो न युक्त इत्याह ॥ **क्वचेति**। लोकेऽपि प्रत्यक्षतः प्राप्तमनुमानागममात्रबाधितम् । दूरस्थवृक्षह्रस्वत्वादिकं तु प्रबलप्रत्यक्षेणैव बाधितम् । तन्मूलानुमानागमाभ्यां वा चन्द्रप्रादेशकत्वादिकमपि प्रत्यक्षमूलानुमानेनैव बाधितम् । दूरस्थवृक्षादिदृष्टान्तेन प्रत्यक्षस्य दूरग्रहणे त्वपटुत्वमनुभूयते हि । यदि देहस्यात्मत्वं प्रत्यक्षतो ज्ञातमनुमानागमबाधितमिति मतम् । तत्र ब्रूमः। तत्क्वचिदपि प्रत्यक्षतः प्रकर्षेणाप्तं न। यद्यपि यदाकदाचित्प्रत्यक्षेण देहात्मत्वमवगम्यते । तथाऽपि प्रकृष्टानुभवाभेदेनैव हीत्यभिप्रायेणाह ॥ **ममेति**। एवं च कादाचित्को देहात्मत्वभ्रमः प्रत्यक्षेणैव बाध्यत इत्यभिप्रायः । कृष्णदेहस्याहं कृष्ण इति व्यवहारः कथमित्यत आह ॥ **उपचार इति**। यद्वद्वस्त्रस्य कर्दमलेपने कृष्णवस्त्रमित्युपचारव्यवहार एवमत्रापि स्यात्। यदि पटस्य कार्ष्ण्यं कर्दमोपाधिकृतमेवमेवात्मनः कार्ष्ण्यमपि देहोपाधिकृतमित्युच्यते। तर्ह्यपि पटस्य स्वतः शौक्ल्यवत्स्वतः कार्ष्ण्यं ममेति न प्रतीयते हि। औपाधिकमप्यमुख्यत्वादौपचारिकमेव। देहादिरित्यादिशब्दादिन्द्रियाणि । स्यात्किम्। अस्तु नाम विवेकिनां देहात्मभेदज्ञानां पश्वादीनां तत्तुल्यमनुष्याणां वा कथं तत्स्यादित्यत आह ॥ **जातेति**। आदिशब्दाद्दुःखपूर्वदेहस्यास्मृतावनुसन्धानविस्मृतौ सत्यां तद्विज्ञानं कथं भवेदिति सम्बन्धः। अन्वयस्य व्यतिरेकादित्यादिशब्दोऽन्वयव्यतिरेकयोर्व्यस्तत्वेनाप्यनुसन्धानज्ञापकत्वप्रदर्शनार्थः। इदमत्राकूतम्। स्वभोगसाधनत्वादिना साध्येन स्तन्यपानत्वादेः साधनस्य पूर्वदेहानुभूतान्वय-

व्यतिरेकव्याप्त्यनुसन्धानेनैव हि ज्ञातमात्राणां प्रथमतः स्तनपानादौ प्रवर्तमानत्वादस्यैव तेषां देहात्मभेदज्ञानमिति । तस्मात्स्वधनादिनाशे नष्टोऽहमिति व्यवहारवदौपचारिकोऽहं कृष्णोऽहं कृशोऽहमित्यादिव्यवहारः । ननु यथा धनादौ भेदव्यवहारः प्रचुरो न हि तथा देहे किन्तु स्वाविविक्तवदेवेत्यत आह ॥ **व्याप्तत्वादिति** । यथाऽग्निमङ्गाराद्विविच्य व्यवहर्तुमशक्यत्वादङ्गारो दहति । अङ्गारस्तेजस्वीत्यादिव्यवहारः । एवमत्रापि प्रत्यक्षगम्यान्माधुर्यविशेषानपि स्वानुभवानकूल्येन प्रतिपादयितुं न क्षमा हि लोकाः तत एवं प्रत्यक्षासिद्धस्य प्रमाणान्तरबाध्यत्वात् । नन्वागम उत्तरकालं च तद्बमोक्षं च ज्ञापयोदित्यत आह ॥ **अगमोऽपीति** । आगमोऽप्यनुमानवदेव साक्षिप्रत्यक्षतः सामान्यतः सिद्धात्मकालादिक एव विशेषं ज्ञापयेत् तत्र यदागमोऽत्यन्तमप्रसिद्धमवगमयति तत्रापि प्रत्यक्षसिद्धपदसमभिव्याहारेणैव हि ज्ञानं राजेव देवराडित्यादिकथं शक्तिग्रहः । अन्यथा साक्षिप्रत्यक्षेण सर्वस्य सामान्यतः सिद्धत्वानङ्गीकारे कथं तत्तच्छब्दानां वाचकत्वशक्तिज्ञानम् । व्युत्पत्तिग्रहणाभावे पुनरागमस्यैवाप्रवृत्तिप्रसङ्गः । तदेवोपपादयति ॥ **अतीतेति** । नातीतानागतं वदेच्छब्द इति शेषः । यद्यन्यत्रातीतानागतयोरपि शब्दस्य वाचकत्वशक्तिग्रहोऽस्तीत्युच्यते । तर्हि सोऽतीतानागतकालग्रहतद्वर्तिपदार्थग्रहे च कथं स्यादिति भावः। यद्यसौ घटादिशब्दो वर्तमानघटादावेव घटं घटत्वादिसामान्यमन्यत्रातीतानागतघटादिष्वप्यनुवृत्तं गमयेत् । कथं सामान्यवर्जितं वस्तुस्वरूपमतीतानागतं तच्छब्दोऽवगमयेत् । स्वरूपत्वं गोत्वादिवदनुगतं चेत्तस्य किं व्यावृत्तं वस्तु भवेत् । सर्वेत्यादेरयमर्थः । सर्वपदार्थानां सत्त्वं नामानुगतधर्मः । पुनर्जडत्वं पुनः पार्थिवत्वं पुनर्घटत्वमित्येतेषामन्ते हि स्वरूपसत्त्वं नामेष्यते । अत एव हि केवलं व्यावृत्तं किमिति प्रश्ने स्वरूपमित्युत्तरं स्यात् । स्वरूपत्वजातिं कल्पयित्वा ततोऽन्यद्व्यावृत्तं कल्प्यते । चेतनावादिनः पक्षे स्वरूपं विवक्षितम् । तत्रापि तथाऽङ्गीकारेऽनवस्थाप्रसङ्गः । एवं व्यावृत्ताख्ये स्वरूपेऽप्यतीतानागतवर्तमाने यदा शक्तिग्रहो भवेत्तदात्वनुवृत्तधर्मस्यानवकाशात् । साक्षिप्रत्यक्षेण सामान्यतो ज्ञानं विना शक्तिग्रहः कुतो भवेत् । तस्मात्सर्वत्राप्येवमेव शक्तिग्रहः । यद्यव्यावृत्तं स्वरूपं विवक्षितं कालाक्षादि । तदेव विशेषतो गोत्वादिसामान्यं च स्यात् । ननु युष्माभि-

व्यतिरेकव्याप्त्यनुसन्धानेनैव हि ज्ञातमात्राणां प्रथमतः स्तनपानादौ प्रवर्तमानत्वादस्त्येव तेषां देहात्मभेदज्ञानमिति । तस्मात्स्वधनादिनाशे नष्टोऽहमिति व्यवहारवदौपचारिकोऽहं कृष्णोऽहं कृशोऽहमित्यादिव्यवहारः । ननु यथा धनादौ भेदव्यवहारः प्रचुरो न हि तथा देहे किन्तु स्वाविविक्तवदेवेत्यत आह ॥ **व्याप्तत्वादिति** । यथाऽग्निमङ्गाराद्विविच्य व्यवहर्तुमशक्यत्वादङ्गारो दहति । अङ्गारस्तेजस्वीत्यादिव्यवहारः । एवमत्रापि प्रत्यक्षगम्यान्माधुर्यविशेषानपि स्वानुभवानुकूल्येन प्रतिपादयितुं न क्षमा हि लोकाः तत एवं प्रत्यक्षासिद्धस्य प्रमाणान्तरबाध्यत्वात् । नन्वागम उत्तरकालं च तद्भमोक्षं च ज्ञापयेदित्यत आह ॥ **अगमोऽपीति** । आगमोऽप्यनुमानवदेव साक्षिप्रत्यक्षतः सामान्यतः सिद्धात्मकालादिक एव विशेषं ज्ञापयेत् तत्र यदागमोऽत्यन्तमप्रसिद्धमवगमयति तत्रापि प्रत्यक्षसिद्धपदसमभिव्याहारेणैव हि ज्ञानं राजेव देवराडित्यादिकथं शक्तिग्रहः । अन्यथा साक्षिप्रत्यक्षेण सर्वस्य सामान्यतः सिद्धत्वानङ्गीकारे कथं तत्तच्छब्दानां वाचकत्वशक्तिज्ञानम् । व्युत्पत्तिग्रहणाभावे पुनरागमस्यैवाप्रवृत्तिप्रसङ्गः । तदेवोपपादयति ॥ **अतीतेति** । नातीतानागतं वदेच्छब्द इति शेषः । यद्यन्यत्रातीतानागतयोरपि शब्दस्य वाचकत्वशक्तिग्रहोऽस्तीत्युच्यते । तर्हि सोऽतीतानागतकालग्रहतद्वर्तिपदार्थग्रहे च कथं स्यादिति भावः। यद्यसौ घटादिशब्दो वर्तमानघटादावेव घटं घटत्वादिसामान्यमन्यत्रातीतानागतघटादिष्वप्यनुवृत्तं गमयेत् । कथं सामान्यवर्जितं वस्तुस्वरूपमतीतानागतं तच्छब्दोऽवगमयेत् । स्वरूपत्वं गोत्वादिवदनुगतं चेत्तस्य किं व्यावृत्तं वस्तु भवेत् । सर्वेत्यादेरयमर्थः । सर्वपदार्थानां सत्त्वं नामानुगतधर्मः । पुनर्जडत्वं पुनः पार्थिवत्वं पुनर्घटत्वमित्येतेषामन्ते हि स्वरूपसत्त्वं नामेष्यते । अत एव हि केवलं व्यावृत्तं किमिति प्रश्ने स्वरूपमित्युत्तरं स्यात् । स्वरूपत्वजातिं कल्पयित्वा ततोऽन्यद्व्यावृत्तं कल्प्यते । चेतनावादिनः पक्षे स्वरूपं विवक्षितम् । तत्रापि तथाऽङ्गीकारेऽनवस्थाप्रसङ्गः । एवं व्यावृत्ताख्ये स्वरूपेऽप्यतीतानागतवर्तमाने यदा शक्तिग्रहो भवेत्तदात्वनुवृत्तधर्मस्यानवकाशात् । साक्षिप्रत्यक्षेण सामान्यतो ज्ञानं विना शक्तिग्रहः कुतो भवेत् । तस्मात्सर्वत्राप्येवमेव शक्तिग्रहः । यद्यव्यावृत्तं स्वरूपं विवक्षितं कालाक्षादि । तदेव विशेषतो गोत्वादिसामान्यं च स्यात् । ननु युष्माभि-

रपि वस्तुषु सामान्यमङ्गीक्रियते हि । तस्यानुगतधर्मत्वमपि स्यादित्यत आह ॥ **न चेति** । तेनानुगतधर्मकल्पनायामप्युक्तरीत्या व्युत्पत्त्यसम्भवे सर्वधर्मिणां भेदानुभवेन निमित्तेन चैकधर्मिता न स्यात्किम् । अयं गौरयमपि गौरन्योऽपि गौरिति दृश्यते ह्येकमेव व्यक्तिष्वनुगतं गोत्वमित्यत आह ॥ **तदिति** । तेषां गवादीनां सादृश्यमेव हि तथा दृश्यते । न हि खुरपुच्छसास्नादिमत्त्वलक्षणात्सादृश्यादन्यद्गोत्वं नामोपलभ्यते । न हि तत्पक्षेऽपीयं जातिरिति व्यवहारेऽपि जातित्वजातिर्नामास्ति । जातिसदृशस्यैव तत्राङ्गीकृतत्वात् । अतो व्युत्पत्तिग्रहणान्यथाऽनुपपत्तेश्चण्डमुण्डादीनां परस्परवैलक्षण्यात्कथं सादृश्येन शक्तिग्रह इत्यत आह ॥ **किञ्चिदिति** । तत्तत्सादृश्यमानतः सास्नादिमत्त्वस्य सादृश्यस्य सामग्र्येणानङ्गीकारे महिषादिष्वतिव्याप्तिः । ततोऽतिरिक्तस्य काण्र्यादेरप्यङ्गीकारे गोष्वतिव्याप्तिरिति तत्तत्सादृश्यपरिमाणानुसरणादित्यर्थः । इतश्च प्रत्यक्षस्य वर्तमानमात्रविषयत्वं नेत्याह ॥ **प्रत्यक्षमिति** । मानसं प्रत्यक्षं च यथातीतार्थगोचरं तथैव तत्स्मृत्याऽस्य प्रमाणत्वम् । तस्यापि वर्तमानमात्रग्राहित्वे चक्षुरादेरविशेषप्रसङ्गात् । नन्वनुभूतमात्रविषयत्वात्स्मृतेः प्रामाण्यं न स्यादित्यत आह ॥ **अतीतत्वेति** । अतीतत्वाख्यविशेषविषयत्वेन विशेषितं हि तदित्याशयः । तदेवोपपादयति ॥ **आधिक्यमिति** । अतीतत्ववर्तमानत्वधर्मिणि तदेवेद वसनमित्यादिप्रत्यभिज्ञाऽतीतविषयत्ववर्तमानविषयत्वधर्मिणि दृश्यते । न चानिर्वचनीयं तस्याः प्रत्यभिज्ञायाः पूर्वमर्धं स्मृतिज्ञानमेव । शेषं प्रत्यक्षम् । एवं ज्ञानद्वयरूपा प्रत्यभिज्ञा । तस्मात्स्मृतीतरस्य प्रत्यक्षस्यातीतविषयत्वं नास्तीति तदेवेदमिति तस्येदन्त्वेन ग्रहणस्यैकज्ञानत्वाद्वर्तमानैकनियमः । वर्तमानमात्रविषयत्वनियमः स्यात्किम् । प्रमासाधनं प्रमाणम् । अज्ञातार्थपरिच्छित्तिः । प्रमास्मृतेस्तु ज्ञातार्थविषयत्वेन प्रमित्यसाधनत्वान्न प्रमाणत्वमित्यत आह ॥ **न चेति** । ननु मयैतद्वसनं ज्ञातमित्यनुभूयते हि । प्रमाणफलभूता प्रमितिः प्राकट्यपरपर्याया तस्मात्कथमत्र मानाभाव इत्यत आह ॥ **मयेति** । यदेते वदन्ति । तत्त्वावेदकप्रमाणफलभूतायाः प्रमित्या उदये प्रमाणादिसर्वप्रपञ्चस्योच्छित्तिरिति । तदप्याशामात्रमित्यायातम् ।

तदभिमतायाः प्रमित्या एवासम्भवात् । तदाह ॥ **मानेति ।** तत्तस्मात्प्रमित्यसम्भवादुक्तरीत्या प्रबलप्रत्यक्षसिद्धत्वाद्वा विच्छित्तिर्बाधः । तत्र स्वप्नदृष्टान्तोऽपि नारतीत्यभिप्रायेणाह ॥ **स्वाप्नानामिति ।** ततः संस्कारमयत्वोक्तेः । आत्मा च क्वचिद्देहत्वादिभ्रमगोचरः स्यात् । यथात्मनि स्वरूपादन्यथादृश्यमानमात्रं मिथ्या न सर्वस्वरूपम् । तर्हि स्वप्नजागरितयोरपि जाग्रत्त्वं शुक्तिरजतादि च मिथ्या स्यात् । न सर्वे स्वप्नजाग्रदवस्थे । स्वप्ने गजादीनद्राक्षम् । जागरिते चैत्रादीनद्राक्षमित्यबाधितत्वेनानुवृत्तेश्च । स्वमतस्य स्वशास्त्राभिमतार्थस्यात्मैक्यस्य विश्वभ्रान्तिकल्पितत्वस्य वा । भ्रान्तित्वेत्यादेरयमर्थः । यदिजगतो भ्रान्तिकल्पितत्वधर्मस्य वादिना प्रतिपिपादयिषितस्य भ्रान्तिकल्पितत्वमङ्गीक्रियते । तर्ह्यभ्रान्तिकल्पितत्वस्यास्मदभिप्रेतस्य कथं सत्यता न स्यात् । उन्मत्तेनाप्यपरिग्राह्यं कथं लोकैः प्रवर्तितमित्यत आह ॥ **ईशेति ।** एवं **मायामात्रमिति** सूत्रस्य परयोजनां निरस्य स्वयं तद्योजयति ॥ **अत इति ।** मुख्यनिमित्तमीश्वरीमाया । अन्यज्जीवस्यादृष्टं । सह पृथगिति स्वयमेव व्याख्याति ॥ **उभाभ्यामिति ।** स्यात्किम् । मनोगतवासनामयस्य स्वप्नस्य कथं प्रज्ञोपादानकत्वमित्यत आह ॥ **प्रज्ञेति** ॥ १ ॥ **पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति** सूत्रं योजयति ॥ **वासनेति ।** उक्तार्थं निगमयति ॥ **सृष्टैवेति** ॥ २ ॥ **तदभावो नाडीषु तच्छ्रुतेरात्मनि ह । अतः प्रबोधोऽस्मात् । मुग्धेऽर्धसम्पत्तिः परिशेषादिति** सूत्राणि विवृणोति ॥ **सुषुप्तीति** ॥ ४—५—७ ॥ **स एव च कर्मानुस्मृतिशब्दविधिभ्य** इति सूत्रं व्याख्याति ॥ **नान्य इति** ॥ ६ ॥ **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीति** सूत्रं व्याख्याति ॥ **न स्थानेति ।** सर्वत्र स्वरूपेष्वेवंविधः परमेशिता । तद्विरुद्धन्तु परेशस्य बद्धत्वाज्ञत्वादिकं प्राज्ञः कारणबद्धरित्यत्यादिवाक्यं तत्र मानं न भवेत् । वाक्यस्य तु बद्धो बन्धादिसाक्षित्वादित्यादिना विषयान्तरं द्रष्टव्यम् । भगवतो गुणोत्कर्षत्वनिर्दोषत्वज्ञानजन्यप्रसादद्वारेण दुःखाप्ययसुखावाप्त्योरेव वेदस्य महातात्पर्यमिति साधयति ॥ **दुःखेति ।** तत्र प्रमाणमाह ॥ **यो मामिति ।**

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारतेति भगवद्वचनम् । अमी ३ इदमेको अस्मि निष्पाळमीद्वा किमु त्रयः करन्ति खलेन पर्षान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्रा इत्यस्यार्थो ब्रह्माण्डवचनेनैवावगम्यते । इदं जगत्सर्वमीदृशानि भूरीणि वा मामभियान्ति सङ्ख्ये । धान्यानि यद्वत्खलगानि मर्त्यः सञ्चूर्णयिष्याम्यहमेक एवेति । प्रसादान्मुक्तिरिति लोकदृष्टान्तोऽप्यवसीयते । स प्रसादो गुणवेदनादिति च । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । इति गुह्यतमामिति गीतासु । ब्रह्मरूपाणि भिन्नानि भिन्नस्थानत्वाच्चैत्रवदित्यनुमा । ब्रह्मणो रूपाण्यभिन्नान्यैक्यानुसन्धानवत्त्वाद्ब्रह्मवदिति प्रत्यनुमानविरुद्धत्वेन च । तत्र ब्रह्मणो भिन्नत्वसदोषत्वादौ वर्तते रूपाणां ब्रह्मणो रूपाणामन्योन्यभेदे तेषां प्रातिकूल्यानुकूल्ययोरपि स्वातन्त्र्यं न स्याद्धि । एवं च केषाञ्चिद्रूपाणां परतन्त्रत्वे तस्य ब्रह्मणः सर्वात्मना पूर्णत्वाभावप्रसङ्गः । सर्वस्मात्तस्य स्वरूपेषु भेदाभावप्रतिपादनेन सर्वगुणपूर्णत्वं सिद्धम् । तदाह ॥ **तेनेश इति** ॥८॥ जीव ईशेनाभिन्नश्चित्त्वादीशरूपवदिति च न वाच्यमित्याह ॥ **न चेति** । तत्रानाभासचित्त्वमुपाधिमभिप्रेत्याह ॥ **यत इति** । श्रुतिस्तस्य जीवस्याभासताख्यमीशरूपवैलक्षण्यं वदति । तां श्रुतिं चैकामुदाहरति ॥ **यथेति** । सत्ताप्रतीतिकार्येषु सत्तायां विनाशेनाप्रतीतौ गमनादिकार्येषु च विशेषकौ गरुडानन्तौ । अत्र परैरुत्प्रेक्षितमनुवदति ॥ **आभासत्वमिति** । चेतनसमुदायरूपेण ब्रह्मैक्यसमुदायैक्यं नाम । **पृथगुपदेशादिति** भेदोक्तेरित्याह ॥ **अत इति** । समुदायांशयोः समुदायरूपस्य ब्रह्मणोंऽशयोः कृष्णाख्यजीवाख्ययोरुदिता सिद्धान्तिनेति शेषः । पूर्ववाद्येवाशङ्क्य परिहरति ॥ **अथेति** । तत्र सूत्रमवतारयति ॥ **आशङ्केति । अत एव चोपमा सूर्यकादिवदि**त्यत्रान्याभावविशेषितां चाह । वेदाधिपो जीवाख्याभासस्य नोपाध्यधीनाचैश्चेत्यावशब्दाद्भेदाभावो वादिविप्रतिपत्तिरेव तद्वचनं न पुनः क्वचित् । बिम्बप्रतिबिम्बयोर्भेदाभावात् । उपाध्यधीनत्वाभावे सूर्यकाद्युपमा कथमित्यत आह ॥ **नेति** । निदर्शने दृष्टान्ते दार्ष्टान्तिकस्य सर्वसाम्यं न विवक्ष्यते हि परीक्षकैः । सुखादीत्यादिशब्दान्नित्यदुःखा-

भावः। अतः सुराणां त्वांशेन किञ्चिज्ज्ञानमात्रमेव। साम्यमेव। उक्तार्थस्य सूत्रपदस्यसम्बन्धं दर्शयति ॥ **तदधीनत्वामिति**। एवशब्दस्तदधीनत्वमेव जीवस्य न रूपाद्यधीनत्वादिकामिति सुप्रकाशयति। चशब्दः किञ्चित्सादृश्यम्। प्रत्यक्षाद्यखिलमानतो जीवेशभेदद्दृष्टिर्मुहुरुक्ता। सर्वशक्तित्वतः सर्वशक्तिवचनतः। कथं ततोऽशेषदोषराहित्यमुक्तं स्यादित्यत आह ॥ **अशेषेति**। न तावत्सर्वचेतनानां मिथ ऐक्यानुसन्धानमस्ति। अनुभवविरोधात्। तत्समुदायैक्यमनुसन्धानरहितं चेद्यथा वृक्षाणां वनाख्येन समुदायेनैक्यं तादृशमेव हि। तन्नास्माकमनिष्टापत्तिरिति भाववानाह ॥ **अनुसन्धानेति**। सुदुष्करं साधयितुमिति शेषः। सर्वज्ञ ईशो मुक्तेः पूर्वमेकतां नानुसन्धत्त इति यतस्तस्मान्नैव स्यात्। दुःखिनैकतामनुसन्धत्ते चेदीशस्यापि दुःखितापत्तिः। मुक्तेः पश्चादैक्यस्यानुसन्धानं स्याच्चेत् किमविद्यमानस्येति चोद्यम्। उभयत्रापि दोषमाह ॥ **मिथ्येत्यादिना**। अविद्यमानस्यैक्यस्यानुसन्धानं चेदीशस्य मिथ्याज्ञानिता भवेत्। अविद्यमानस्यैक्यस्यापि तदैवानुसन्धानमासीन्न तु पूर्वमिति चेत्। पूर्वमज्ञत्वमापतेत्। उक्तं पूर्वमसदैक्यं यदि पश्चाद्भवेत्तर्हि सप्तमो रसोऽपि स्यात्। कुत्रचित्पूर्वं भिन्नस्य पश्चादैक्यादर्शनात्। उन्नद्धमुत्कृष्टम्। नेह नानाऽस्ति किञ्चन। इन्द्रो मायाभिः पुरुरूप ईयते। युक्ता ह्यस्य हरयः शतादशेत्ययं वै हरयोऽयं वै हरयो दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्माऽपूर्वमनपरमबाह्यमयमात्मा ब्रह्म यश्चायमग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयो यमेव स योऽयमात्मेदममृतमिदं ब्रह्मेत्यादिश्रुतिमानेन तत्रेश्वरे भेदोऽपि नास्ति। चेतनैक्येऽनुसन्धानं प्रमाणमित्युक्तमेव। विस्तरेणाह ॥ **जीवेति**। इन्द्रादिजीवांशा अर्जुनाद्या नियमेनैक्यानुसन्धानवन्तः। यदि स्वरूपेणैकता तर्हि न तु स्थानाद्यैक्यात्। यथा सोमे ब्रह्मावेशाद्ब्रह्मांशत्वव्यवहारे सत्यपि तस्य स्वरूपैक्याभावादनुसन्धानाभावः। अशेषमनुसन्धानमित्युक्तं स्पष्टयति ॥ **सुखेति**। नन्वंशिनस्तु सामस्त्येन सुखाद्यनुसन्धानमुच्यते हि। कथं तेनाभिन्नस्यैवांशस्य तद्वन्नास्तीत्यत आह ॥ **विशेषस्त्विति**। ईशस्याशक्यं न विद्यते चेत्स्वस्य जीवैकतामपि कुर्यादित्यत आह ॥ **सेति**। सर्वमानविरोधं प्रकाशयति ॥ **ईशत्वे-**

**नेति** । श्रुत्यादिभिरीशत्वेनैव विज्ञातं भगवन्तमनीशजीवत्वेनोपदिशेच्छ्रुतिः । यदि वाऽनीश्वरत्वेनैव प्रत्यक्षादिभिर्विज्ञातमीशत्वेनोपदिशेत् । तर्ह्युपजीव्यप्रमाणविरोधेनैव मानत्वं गच्छेत् । न च नित्यत्वेन निर्दोषायास्तस्या अमानत्वं युक्तम् । तस्मादीशानीशयोरैक्यं न चोपदिशति श्रुतिरित्याशयः । अस्येशस्य । अयुक्तमित्यादेरयमर्थः । अन्यत्रेशादन्यत्र । निरंशजीवादौ सामर्थ्यैकदेशविनियोगादिकमीशबलाद्युक्तं भवति । अत ईशादन्यत्र जीवे यद्दृष्टमंशांशिनोः शक्तितारतम्यादि तदपीशे तु नैव कल्प्यते । प्राज्ञः किञ्चन संवेत्ति तुरीयं तत्सर्वदृक् सदेत्यादिश्रुत्यःभासासमष्यत्वि-चारितार्थतया श्रुत्यादिविरुद्धेऽर्थे प्रयुक्ता श्रुतिः श्रुत्याद्याभासः । यत्तस्येश्वरत्वस्य विरुद्धं तदेव न कल्प्यते । न पुनश्चेतनत्वादिकम् । स्मृत्या च तस्य स्वव्याहर्तिं साधयति ॥ **ईश इति** । जगन्मिथ्येति वचने जगतो मिथ्यात्वधर्मस्यापि जगदन्तर्भूतत्वात्सोऽपि मिथ्येति प्रतिज्ञाव्याघातः । भेदनिषेधेऽपि भिदा नेत्यनयोः शब्दयोर्भेदोऽङ्गीकर्तव्यः । अपरथा भिदाभिदेत्येवोक्तं स्यात् । ईशस्य सर्वोपपादकत्व-मित्यादौ च मानमाह ॥ **नायुक्तमिति** ॥ १० ॥ किञ्चिदेकस्यैवाणिममहिमादिकं यदीशित्वविरोधि स्यादीशितव्यमिथ्यादिकं रूपवत्त्वादनित्य ईशोऽनित्यस्य च को हि महिमाऽत्र तस्मिन्भक्त्या च किमित्येतामाशङ्कां परिहरन् **अरूपवदेव हि तत्प्रधानत्वादिति** सूत्रं व्याख्याति ॥ **स चेति** । अत इत्यादेरयमर्थः । सहस्रशीर्षा पुरुषः । वेदाहमेतं पुरुषं महान्तमित्यादेरप्राकृतरूपज्ञानात्मकस्य वाचकत्वात् । अवर्णमचक्षुः-श्रोत्रं तदपाणिपादमित्यादेः प्रकृतरूपनिषेधकत्वादनित्यत्वम् । श्रुतिवर्गद्वयस्य परस्परविरोधित्वं च न स्यात् । घटाद्यनित्यत्वे प्राकृतरूपवत्त्वस्य प्रयोजकत्वात् रूपवत्त्वमात्रहेतोरप्रयोजकत्वं स्यात् । **प्रकाशवच्चावैयर्थ्यमिति** सूत्रं विवृणोति ॥ **यथेति** । अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीति श्रुतिः । यथा सुप्त्याद्यवस्थायां प्राकृतप्रकाशाभावेऽपि परमात्मानं ज्योतिःशब्देनाह । एवमेव पश्यते रुग्मवर्णमित्यादिका श्रुतिरपि ॥ ९ ॥ **वृद्धिह्रासभाक्त्व-**

**मन्तर्भावादुभयसामञ्जस्यादेवमिति** सूत्रं व्याख्याति ॥ **तद्धक्तीति** ॥१२॥ **स्थानविशेषात्प्रकाशादिवदिति** सूत्रं व्याख्याति ॥ **प्रतिबिम्बवदिति । परमतःसेतून्मानसम्बन्धभेदव्यपदेशेभ्य** इत्यस्यार्थं सूचयति ॥ **तस्माद्भिन्नश्चेति** । न चात्र सूत्रक्रमविपर्यासो दोष आशङ्कनीयः । सिंहावलोकनन्यायस्यापि सम्भवात् । न च तावता सूत्रक्रमभङ्गप्रसङ्गः । अनेनैव भगवता भाष्ये सूत्रक्रमस्य सुतरां प्रदर्शितत्वात् । ईशता सा चान्येति शेषः ॥ १७ ॥ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय** इत्यभिप्रायं सूचयत्याशङ्कां परिहरन् ॥ **न युज्यत इति** ॥ १३ ॥ **तदव्यक्तमाह** हीत्यधिकरणार्थं सूचयति ॥ **अव्यक्त इति** ॥ १४ ॥ नन्वीशस्य सर्वावस्थाप्रेरकत्वादिगुणलक्षणो महिमा ह्यत्र विवक्षितो न घटते । गुणानां भेदाभ्युपगमे च गुणिमात्रस्यैव विद्यमानत्वादित्यत आह ॥ **तदभिन्ना इति** । गुणत्वेन भोग्यतया गुणित्वे भोक्तृतया च स्थिताः । ननु क्रियादिभिरनित्यधर्मैरीश्वरस्यैक्याङ्गीकारे तस्याप्यनित्यत्वप्रसङ्गादित्यत आह ॥ **विशेषात्मतयेति** । नेत्यादेरयमर्थः । धर्माणामियं क्रियाद्यात्मकता च नानित्या । सा शक्तिरूपतयैव सविशेषत्वेन क्रियादिरूपतेत्युच्यते । इति यस्मात्तस्मान्नानित्यता। द्रव्यं स्वयमेव गुणगुणितद्विशेषात्मकमिति स्वनिर्वाहकताहेतोः स्यात् । द्रव्येणात्यन्तमभिन्नश्चेद्विशेषो नाम नास्तीत्याशङ्कां परिहरति ॥ **तथाऽपीति** । स इमान् लोकान्व्यसृजत । स ब्रह्मणा विसृजति । स रुद्रेण विलापयति । सोऽनुत्पत्तिरलयः । एक एव हरिरित्यादिश्रुत्या तत्र स स इति प्रस्तुतस्य परमात्मनः स्रष्ट्रादिरूपेणाभेदश्च गम्यते । समानाधिकरणोक्तेः । एवमभेदिना कथं भिन्नः किमाहोस्वित्तदभिन्नः । भिन्नश्चेत्तस्य भेदस्यापि भेदान्तरं तस्यापि तथेत्यनवस्था स्यात् । भेदस्त्वभिन्नश्चेत्पुरा विशेषविशेषिणोर्विशेष एवाभिन्न इति किमिति तन्नाङ्गीक्रियते । तथाऽङ्गीकारे च तस्यापसिद्धान्त इत्याशयेनाह ॥ **विशेष इति** । क्रियाद्याख्यो विशेषस्त्वभिन्न इति तेन तार्किकेण नाभ्युपगम्यते । योऽयं क्रियाद्याख्यविशेषस्य द्रव्येण भेदः सोऽभिन्नः । तस्मान्नानवस्था । न च तत्रास्माभिर्भेदोऽभ्युपगतः । एकत्रापर्यायनानाशब्दवृत्तिविशेषोऽभ्युपगम्यत इति । नैवम् । तथा

सति धर्मिणो भेद इति व्यवहारः कथं घटते । तयोः शब्दयोर्निर्विशेषैकार्थवाचकत्वेन पर्यायत्वप्रसङ्गात् । तदेतदाह ॥ **भिन्न इति** । अयं घटः स्तम्भेन सह भिन्नः कुम्भेन सह भिन्न इति । प्रतियोगिभेदादेक एव भेदः सविशेषत्वतो हि बहुधा दृश्यते । इतश्च विशेषोऽङ्गीकर्तव्य इत्याह ॥ **अभेदभेदयोरिति** । योयं गुणगुणिनोर्भेदस्ताद्विवक्षितो यश्चाभेदो धर्मिण आत्मनां तयोरुभयोरपि धर्मिणः स्वरूपत्वमिष्यते । तथा हि । भिदाभेदिनैकेति शेषः । अविशेषे कथमेवं भवेत् । भेदिमात्रात्वत इत्यन्वयः । धर्मिमात्रं हि विद्यते न तु भेदाभेदौ विद्येते इति वक्तुं न शक्यते । धर्मिणो-र्विशेषाङ्गीकारादित्याशयः । किं भेदः कल्प्यते तदा तर्हि गुणगुण्यादीनां किमिति भेदः कल्प्यते । तत्रापि विशेषेणैव व्यवहृतिसम्भवात् । एवं चेद्गो-हयादीनामपि विशेष एव स्यान्न भेद इत्याह ॥ **ऐक्येति** । न ह्यानन्दो ब्रह्मेत्यादिवद्गौरश्व इति सामानाधिकरण्येनाभेदानुभवः । सत्यमेवं गुणगुणिभावमङ्गीकुर्वतो विशेषोऽङ्गीकार्यो न पुनर्निर्गुणब्रह्मवादिनेत्यत आह ॥ **सच्चिदादेरिति** । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्येषु सच्चिदा-नन्दादेः शब्दजातस्यापर्यायत्वसिद्ध्यर्थं विशेषोऽङ्गीकार्यः । यदि जडत्वाद्यसत्यविशेषणं वारयितुं ज्ञानादिशब्दान्तरमिष्यते । तर्हि ब्रह्मणो जडत्वादिमाया-मयविशेषराहित्याख्यविशेषणविशेषिता तद्राहित्यविशेषिता च मायामयी चेत्सा च तथेत्यनवस्थितिः । निर्विशेषं शब्दप्रवृत्तिनिमित्ताभावान्न तावदुक्तिर्भवेत् । सत्यमेवमवाच्यं ब्रह्म जाड्यादिव्यावृत्तिद्वारेण ज्ञानादिपदजातेन लक्ष्यते परमिति चेत्तेन लक्ष्यत्वं नाम विशेषो भवेत् । अपिशब्दाद्व्यावृत्तादिपदवाच्यत्वं च स्यात् । पुनः पुनरित्यादेरयमर्थः । व्यावृत्तपदेनापि लक्ष्यमिति वदति चेत् । किं तल्लक्ष्यमिति पृष्टे ब्रह्मेति पदान्तरम् । तत्राप्येवं तत्राप्येवमित्यनवस्था स्यात् । ननु जाड्यादिविशेषेण विशेषितत्वं ब्रह्मण इति । तदिष्टमेवास्माकम् । भावाद्वैतवादित्वात् । न सार्वज्ञसुखत्वादिभावविशेषितत्वमङ्गीकार्यमित्यत आह ॥ **यच्च भावेति** । असत्त्वेत्यादेरयमर्थः । असत्त्वाज्ञानत्वाव्याप्तत्वादेश्चानिवर्तनादसुखम-ज्ञानमव्याप्त्यादि च ब्रह्म स्यात् । किं सत्यं ज्ञानमनन्तं ब्रह्मेत्यादौ सत्यादिपदैर्ब्रह्मणोऽनृतादिविरोधित्वमङ्गीकुर्मो हि । तस्मान्नासत्यत्वादिकं तस्य

प्रसज्यत इत्यत आह ॥ **अनृतादीति** । अनृतं न भवतीत्युक्तऋतत्वाख्यो भावधर्मः स्यादेव ब्रह्मणः । स पुरुषः स ईश्वरः स ब्रह्मेतीश्वरशब्दविवक्षितेनानेनैश्वर्यविरोधित्वेन प्राप्तमैश्वर्यं किमिति निवार्यते । विशेषाभावात् । किञ्च ज्ञानादिपदाभिप्रेतं जडत्वादिविरोधित्वमस्याभ्युपगम्यते हि । तेनाभावधर्मिणोऽपि ब्रह्मणः सविशेषत्वमापतेदेव । तस्य ब्रह्मभावात् । न चेदभाव एव वा स्यात् । ब्रह्मैव वा स्यात् । एवं च सविशेषत्वे ऐश्वर्यादीनां भावधर्मादीनां को विरोधः । इदमनृतादीत्यादिशब्दाभिप्रेतम् । अखण्डवादी निर्विशेषब्रह्मवादी मायीत्यखण्डवादिनां विशेषभेदवादी वैशेषिकादिः । खण्डाखण्डो भेदवादी भट्टादिः । **उभयव्यपदेशात्त्वहिकुण्डलवत् । प्रकाशाश्रयवद्वा तेजस्त्वात् । पूर्ववद्वेति** निदर्शनत्रयेणाह भगवान्सूत्रकारः । यद्वाह्वा वदन्ति । अनन्वितत्वेनानभिहितानामर्थानामन्वय इति । तदप्यनेनापास्तम् । सर्वपदार्थानां गुणाद्यैक्यसाधनेनानन्वितस्यैवार्थस्यैवाभावप्रतिपादनात् । तदाह ॥ **तच्चेति** । यदेत्यादेरयमर्थः । पुरुष इत्येकपदेनापि तस्याशेषविशेषाणां सामान्यत उक्तिर्भवेत् । धर्मधर्म्यैक्यात् । धर्मिपदेन धर्माणां सामान्यत उक्तिसम्भवात् । अपरथा पुरुष इत्युक्तवन्तं प्रति पुरुषः किं करोतीति प्रश्नो न घटते । तावन्मात्रश्रवणेनैव कृतकृत्यत्वसम्भवात् । सामान्यतः प्रतीतानां पूजनभोजनशयनादीनां विवेचनाय हि पृच्छति । पुरुषोत्तमं पूजयतीत्युत्तरेण पदेन विशेषावगतिर्भवेत् । तदेवोपपादयति ॥ **यत इति** । अनुभवेनापि निश्चितोऽयमर्थ इत्याह ॥ **स्वार्थ इति** । अनन्वितवादे दूषणमाह ॥ **यदेति** । अनन्वयस्य कथं ज्ञानम् । शब्दार्थत्वं यदाऽस्य नेत्युक्तमेव प्रतिपादयति ॥ **यदैवानन्वितेति** । न तदर्थ इत्यादेरयं भावः । एवं पदानामर्थानन्वय इत्यायातम् । तथा च तत्पक्षे वाक्यं नाम न स्यात् । निराकाङ्क्षपदानि वाक्यमिति हि वाक्यलक्षणम् । तत्रोचितकर्त्राद्यभिधानेन निराकाङ्क्षता च स्यादेव । तत्पक्षे तु कर्तृकर्मक्रियाद्यर्थेष्वभिहितेषु सत्स्वप्यन्वयस्यानवगतत्वादेवाकाङ्क्षायाः पूर्तेर्वाक्यं नाम न स्यात् । प्रमाणमेव न स्यात् । प्रकृतमुपसंहरति ॥ **अत इति** ॥ १५ ॥ **परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य** इति सूत्रमपि व्याख्याति सूत्रक्रमं

व्यञ्जयन् ॥ **ते चेति । बुद्ध्यर्थः पादवदिति** सूत्रं व्याख्याति ॥ **उपदेशात इति** । वेदवचनतः । आनुकूल्यादिल्यादिशब्दा-ज्ज्ञानस्य विषयसम्बद्धत्वं पूर्णत्वादीत्यादिशब्दात्स्वतन्त्रत्वम् । अथैष एव परम आनन्द इति श्रुतौ श्रुतम् । पूर्ण इत्यादौ च स्वाद्वात्ति इति स्वादुरानन्दः स्वादुत्तमः स्वानन्दश्रेष्ठ इत्यर्थः । एकलः प्रधानः ॥ १६ ॥ कर्मणैव सर्वस्य नियतत्वसम्भवात्कथं विष्णोः सर्वनियन्तृत्वमित्याशङ्कां परिहरन् **फलमत उपपत्तेरिति** सूत्रं व्याख्याति ॥ **स एवेति** । धर्माधर्मणां बोधनं नाम तान्निमित्तीकृत्य कर्मान्तराणां प्रवर्तनं फलदानं सुखादिदानं प्रेरणादिकमित्यादिशब्दान्निवर्तनम् । प्रत्येकमित्यादेरयमर्थः । तेषु कर्माभिमानिचेतनेषु प्रत्येकं पृथक् चेतनानि कर्माणि सन्ति । तानि चैवं पृथक् चेतनान्यनन्तकर्माणि तानि चैवमित्येकैकस्मिन्नेव जीवेऽनन्तधाऽनन्तकर्मनियन्तुरीश्वरस्य शक्तिरनन्तेति महामाहिमा सर्वोपकारकश्चासौ । तथाऽन्यानपि सर्वशोऽन्यानि कर्माण्यपि तथैव भगवदधीनानि ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥ ३—२ ॥ * ॥ * ॥

॥ श्रीगुरुभ्यो नमः ॐ ॥ इति पादक्रमो भवेत् पादचतुष्टयोपदिष्टानां वैराग्यादिसाधनान्तानामेवमुत्तरोत्तरकारणत्वादयं पादक्रमः सम्भवदेव । विरक्त्यादीनामुत्पत्तेर्विचारायत्तत्वात् । उपासकेनाहम्भावकथनमुखेन युक्त्यादिपदानां सङ्गतिं दर्शयति ॥ **युक्तित इति** । आपाततो युक्तिविरोधे प्रतीते सति ततः प्रबलयुक्तितस्तं परिहृत्य ज्ञातवेदार्थोऽध्यात्ममात्मानमधिकृत्य वर्तमानं शरीरेन्द्रियादि तस्य सन्निहितत्वतो वेदविचार्ययोरात्मपरमात्मनोः स्थानत्वेनाध्यात्मत्वस्य जिज्ञासासन्निहितत्वत इन्द्रियादौ युक्तीनामुपजीव्यप्रमाणत्वात्तत्र बहुयुक्तिविरोधानां भानात्तद्वाचकश्रुतीनां युक्तिसहितश्रुतिविरोधपरिहाररूपेण प्राणस्वरूपगान्विरोधानेव परिहृत्य प्राणदेवतानां प्रसादानुरञ्जितो भवेदधिकारी । ईशस्य सर्वदेहादिकर्तृत्वज्ञानेन स्नेहबहुमानाभि-

कायांश्च भक्तौ सामान्यतो ज्ञातायां तदन्यत्राधिकवैराग्यं सुलभं स्यात् । तद्रशत्ववेदनाद्विशिष्टाचार्याख्यसम्पदा किमुपास्तौ कृत्यमित्याकाङ्क्षायां तदनुग्रहेणैवंविधा ब्रह्मजिज्ञासा कर्तव्यैवोपास्ति विधित्सता पुरुषेणेति प्रकाशयन्वृत्तमनुवदति ॥ **कर्तव्येति** । अत्रादिसूत्रद्वयं व्याख्याति ॥ **किमितीति** । किमर्थमिति पुनः । अत इति सामान्योक्तित्वात् । पुनरपि संशये । अभिप्रायमाह ॥ **येनैवेति** । गतोऽवगतः । शास्त्रयोनित्वादित्याशङ्कारूपेण ॥ **मोक्षादीति** । दुःखहानिरल्पापीति शेषः । विमतं सकर्तृकं कार्यत्वाद्घटवदिति केवलानुमागम्येश्वराद्यदि मोक्ष इष्यते तर्हि विमतो मोक्षदो न भवति पुरुषत्वादृष्टपुरुषवदित्यनुमैव तस्य मोक्षदातृत्वं विनिवारयेत् । पतिं विश्वस्यात्मेश्वरमित्यादिना केशवस्यैव हि स्वतन्त्रत्वमित्यभिप्रेत्याह ॥ **मोक्षद इति** । अन्याश्रयेणेत्यादेरयमर्थः । यद्येष ब्रह्मादिरपि विष्ण्वाश्रयेण स्वभक्तेभ्यो मोक्षं दद्यादित्युच्यते तर्हि तत्र ब्रूमः । स विष्णुस्तेन मुमुक्षुणा स्वयमननुसृतो मोक्षं न दद्यादेव । यमेवैष वृणुते तेन लभ्यः । यमेष भगवानेव प्रसादेन वृणुते तेनायं लभ्यः । तमेवं विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय । तं विदित्वैव मृत्युमत्येति । अयनाय मोक्षाय । मोक्षप्रदे सृष्ट्यादिकर्तरि ब्रह्मशब्दवाच्ये हि शास्त्रस्य तात्पर्यम् । तानि च लक्षणान्यस्यां श्रुतौ समुद्रान्तःस्थत्वादिलिङ्गैर्विष्णौ निर्णीतायां विष्णोः प्रतीयन्ते । तस्मात्स एव शास्त्रयोनिरित्यभिप्रायेणाह ॥ **य एनमिति** । य एनं विदुरमृतास्ते भवन्तीत्युक्तस्तदेव ब्रह्म परमं कवीनामित्यवधारितश्च । यमन्तः समुद्रे कवयो वयन्तीति समुद्रगत्वेनोक्तो नारायणो हि । यतः प्रसूता जगतः प्रसूतीति तत्रैव ॥ **तत्तु समन्वयादिति** व्याख्याति ॥ **शास्त्रयोनित्वमिति** । **ईक्षतेर्नाशब्द**मित्यस्याभिप्रायमाह ॥ **एवमिति** । **गतिसामान्यादिति** सूत्राभिप्रायं दर्शयन्नित्याशङ्क्य परिहरति ॥ **कथमित्यादि** । अनन्तता वेदानामिति शेषः । इतीत्यादेरयमर्थः । इत्यभिप्रायेण निखिलवेदस्यापि स्वप्रसादेन स्वभक्तैरपि प्रमेयतां प्रकाशयन्वेदपतिरेकस्यैव विष्णोर्ज्ञानस्यैव निखिलवेदेऽपि महातात्पर्यतः प्रतिपाद्यत्वेन समानत्वमाह । ज्ञानसूर्यो ज्ञापने सूर्यः । यथा सूर्यो

बाह्यार्थान्ज्ञापयति तथा सर्वार्थान्ज्ञापयन्तामित्यर्थः । शाखेत्यादेरयमर्थः । चतुष्पञ्चशाखाप्रतिपाद्यं वस्तु ज्ञानम् । तद्दृष्टान्तेनान्यत्रापि स एव तात्पर्यविशिष्टोऽर्थ इत्यनुमितत्वेन गतिसामान्यं ब्रूयात् । एवंविधः प्रभुः प्रतिजज्ञ इति यस्मात्तस्मादेवानामपि पूर्यते । आकाङ्क्षेति शेषः । न हि बहुविशेषविदां देवानां सामान्यपुरुषैः प्रतिपादितेऽप्याकाङ्क्षापरिपूर्तिर्भवति । तैः प्रतिपाद्यमानस्य सिद्धत्वात्तेषां विशेषाकाङ्क्षितत्वाच्च । प्रधाने निहते मल्ले सर्वे मल्लाः प्रदुद्रुवुरिति हि प्रधानमल्लनिबर्हणन्यायः । शब्दानामन्यत्र प्रसिद्धिबलादचालनीयत्वे सम्भवात्तत्समन्वयोक्तौ ततो दुर्बलानां लिङ्गानां समन्वयः साध्य इत्याकूतम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिमित्यादिश्रुतौ देवतान्तरगत्वेन प्रतीता इन्द्रादिशब्दाश्च मुख्यतो विष्णुमेव वदन्ति । ऐश्वर्यादिः शब्दनिमित्तस्य विष्णौ विद्यमानत्वात्स्यात् । किं कथमिन्द्रादिषु प्रसिद्धास्तानुपचारतो वदन्तीत्यत आह ॥ **अशेषेति** । पूर्णत्वस्वातन्त्र्यादिविशेषगुणवत्त्वत एषो द्वितीयपादेऽभिधीयमानः । तेषामित्यादेरयमर्थः । नामात्मकानां शब्दानां विष्णौ समन्वये साधितेऽपि तैः सह पठितानां लिङ्गानामन्यगत्वेन तु नाम्नामपि सम्यक् समन्वयो न स्यात् । तृतीयपादस्याशङ्कापरिहाररूपेणानेन समन्वयप्रतिपादनेन सङ्गतिमाह ॥ **उभयत्रेत्यादिना** । समन्वयो हरावेवेत्याहेत्यन्वयः । अन्यत्र कुतःशब्दा लिङ्गानि च मुख्यतो न सम्भवन्तीत्यत आह ॥ **यतो नैवेति** । अयो यथा दाहकत्वं यथाऽन्याधीनौष्ण्यमयो दाहकशब्दवाच्यत्वमुपागतम् । एवं यदधीनाः प्राणादयः प्राणादिशब्दार्थत्वमुपागताः । आशङ्कां परिहरन्समन्वयप्रतिपादनेन चतुर्थपादस्य सङ्गतिमाह ॥ **एवं चेति** । विरोधादित्यादेरयमर्थः । विष्णोरवरादिशब्दवाच्यत्वेऽवरदुःखित्वादेरपि प्राप्तिर्भवेदिति यतस्तस्माद्विरोधात् । स च विरोधो बहुप्रमाणविषयत्वात्प्रबलो हि । यथा राजा विजयी भवेत् यथा भृत्यादीनां विजयित्वहेतुराजा विजयी प्रसिद्धो भवेत् । स्वातन्त्र्यान्न च दूषणं हरेर्दुःख्यादिशब्दोक्तत्वे सत्यपि हरेर्जीवादुःखित्वादिस्वातन्त्र्यस्यैव विवक्षितत्वान्न किञ्चिद्दूषणमाशङ्कनीयम् । द्वितीयाध्यायस्य प्रथमाध्यायेन सङ्गतिं दर्शयति ॥ **एवमिति** । तृतीयाध्यायस्य पूर्वाध्यायद्वयेन सङ्गतिं दर्शयति ॥ **समन्वयेति** । एवंभूतं परं ब्रह्माख्यं वस्तूद्दिश्य किं

मया कार्यमित्युक्तायां वैराग्यपादे प्रोक्ते भक्तिपादे शास्त्राभ्यासस्वरूपिणी भागवतशास्त्राणां व्याख्यानश्रवणमननरूपिणी । तद्यथोक्तं भागवते । एतद्ध्यातुरचिन्तानां मात्रास्पर्शेच्छया मुहुः । भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् । यमादिभिर्योगपथैः कामलोभहतो मुहुः । मुकुन्दसेवया यद्वत्तथाध्यात्मानुशाम्यति । पानेन ते देव कथा सुधायाः प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा त्वापुरकुण्ठधिष्ण्यम् । तथा परे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया त इति । तदङ्गं धारणादिकम् । धारणं प्राणायामप्रत्याहारासनानियमास्तयोरुपास्त्योरङ्गम् । युक्तीराह ॥ **पृथग्दृष्टिरिति** ॥ ॐ **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । सलिलवच्च तन्नियम** इति सूत्रद्वयाभिप्रायमाह ॥ **यथाशक्तीति** । आत्मज्ञानानुरूपत्वमिति व्याख्याति ॥ **आत्मज्ञानेत्यादि** । यथाशक्तिविचारणाभावे दूषणमाह ॥ **वेद इति** । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मनेति स्मृतिः । स्वाध्यायोऽध्येतव्य इति श्रुतिः । तथाऽपि देवादिवत्सामर्थ्याभावेन यथाशक्तिप्रयत्नपक्षेऽपि निर्णीतं ब्रह्मसूत्रादि । अत्यशक्ये तु निद्रादौ निद्रारोगादौ सति श्रवणादेरत्यशक्यत्वे सति यदि कस्मिंश्चित्पुरुषे सम्यग्ज्ञानस्यैव प्राचुर्यमुपलभ्यते । अन्यथाज्ञानस्याल्पत्वम् । तस्यापि संशयेषु सत्सु का गतिरित्यत आह ॥ **महद्भ्य इति** । महद्भ्यो विष्णुभक्तेभ्यो यथाशक्ति च संशयान् । छिन्द्यात्स्वतोऽधिकाभावे स्वयमेव समभ्यसेत् । ब्रूयादपि च शिष्येभ्यः सत्सिद्धान्तमहापयन् । कीदृशः सत्सिद्धान्त इत्याकाङ्क्षायामाह ॥ **अशेषेति** । सत्सिद्धान्तोपपादकत्वेन तत्रैवान्तर्भूतानर्थानाह ॥ **स्वतन्त्रत्वमिति** । यदभेदे तदन्वयः । विष्णोः सर्वतोऽदोषिणो जडाजडाद्भेदाभावेऽपि दोषसम्बन्धो भवतीति यस्मात्तस्मादेवं तस्याप्यभावः । पूर्वं भिन्नस्य पश्चादभिन्नस्य भेदाभावोऽपि तर्हि संसारावस्थायामपि जीवेनेशस्याभेदः स्यादित्यत आह ॥ **पूर्वेति** । अपि सम्यगिति । इत्यपि सत्सिद्धान्तः । तदनन्तरता विष्ण्वनन्तरता । क्रमान्मुक्तावपि वर्तन्त इति शेषः । अमुक्तानां योगिनामपीति शेषः । एतदेवोक्त-

सिद्धान्तबाधेव । सम्यगित्यादेरयमर्थः । ईशरमाब्रह्मादिषु यथार्थज्ञानतारतम्यानुसारेण । सुखदुःखात्मकफलतारतम्यम् । १-२ ॥ मनसा चान्यदाकाङ्क्षात् मनसा च शाश्वतान्मोक्षमार्गदन्यत्र विषयादिषु वर्तमानादभिलाषात् । प्रायश इत्यस्य कृत्यमाह ॥ **ऋजूनामिति ।** एक एवास्ति दोष इति शेषः । भक्तिस्वरूपमनुभवावष्टम्भेन दर्शयति ॥ **स्वादरइति ।** सत्स्वन्यत्र ततो दया कार्या । आत्मनः समेभ्योऽन्येषु हीनेषु दया कार्या नासत्सु । सत्सिद्धान्तबोधकप्रमाणमाह ॥ **तत्तम इति ।** रमाब्रह्मशिवादीनां विष्णोराधिक्यदृष्टेर्निमित्तात्ततमो व्रजेदिति किमु वक्तव्यम् । तयोभ-योर्भेदाभेदयोर्द्रष्टुस्तमोगतिर्भवतीति च किमु वक्तव्यम् । ननु कामं क्रोधं भयं स्नेहं मैत्रीं सौहृदमेव वा । नित्यं हरौ विदधतो यान्ति तन्मयतां हि त इत्यादिवाक्याद्द्वेषयुतभावनयाऽपि मोक्षसम्भवात्कुतो भक्तियुतोपास्तेरेव मोक्ष इति नियम इत्यत आह ॥ **द्वेषादिति ।** मानस्तेनेभ्यो येऽभि-द्रुहस्पदे निरामिणो रिपवोऽन्येषु जागृधुरिति श्रुतिं सूचयति ॥ **रिपव इति ।** तदभेदिनस्तदभेदवेत्तारः । यो द्विष्यादिति मोक्षधर्मवचनम् । आलोकान्तस्याल्पजनाधमस्य । अन्वीषदर्थेऽपि वर्तमानत्वात् । अतिप्राकृतस्यापीत्यर्थः । कामं क्रोधमित्यादेरर्थस्तु भगवतैवोक्तः श्रीभागवत-टीकायाम् । कामिनः कामित्वं क्रोधिनः क्रोधित्वमेव सर्वदा भवतीत्यादिरेव तन्मयता । मुक्तावपि हि कामिन्यो विष्णुकामा व्रजःस्त्रियः । द्वेषिणश्च हरौ नित्यं तमसि द्वेषिणोच्छ्रित इति च । भक्त्या हि नित्यकामत्वं न तु मुक्तिं विना भवेत् । अत एकान्ततया वाऽपि मुक्तिर्भक्तिमतां हरौ । स्नेहयुक्ताः सदा देवाः कामित्वेनाप्सरास्त्रियः । काश्चित्काश्चिन्न कामेन भक्त्या केवलयैव तु । मोक्षं प्रयान्ति नान्येन भक्तिं योग्यां विना क्वचिदिति पाद्मे । भक्त्या वा कामभक्त्या वा मोक्षो नान्येन केनचित् । कामभक्त्याऽप्सरस्त्रीणामन्येषां नैव कामतः । उपास्यः श्वशुरत्वेन देवस्त्रीणां जनार्दनः । जारत्वेनाप्सरस्त्रीणां कासाञ्चिदिति योग्यता । योग्योपासां विना नैव मोक्षः कस्यापि सेत्स्यति । अयोग्योपासनाकर्तुरनर्थश्च भविष्यति । तस्मात्तु योग्यतां ज्ञात्वा हरेः कार्यमुपासनमिति । टीकायाम् । पतित्वेन श्रियोपास्यो ब्रह्मणो मे पितेति च । पितामहतयाऽन्येषां त्रिदशानां जनार्दनः ।

प्रपितामहो मे भगवानिति सर्वजनस्य तु । गुरुः श्रीब्रह्मणो विष्णुः सुराणां च गुरोर्गुरुः । मूलभूतगुरुः सर्वजनानां पुरुषोत्तमः । गुरुर्ब्रह्मादय जगतो देवो विष्णुः सनातनः । इत्येवोपासनं कार्यमन्यथा तु कथञ्चनेति वाराहे ॥३१॥ इति न चेत्यादेरयमर्थः । शरीरपातपर्यन्तं ब्रह्मणो हि भोगो विद्यते । वाय्वादीनां संयोगस्य व्यापारक्षमस्य जीवनापरपर्यायस्य वियोगेन तस्य शरीरपाते तस्य भस्मीभावः स्यात् । तस्मान्मोक्षो नाम नैवास्ति । अतस्तदर्थमुपास्तिश्चाकर्तव्येति । इदं निराकरोति ॥ **तर्केणेति** । न च योग्यानुपलब्धिलिङ्गेन मोक्षाभावोऽवगम्यते । प्रत्यक्षातिरिक्तप्रमाणानङ्गीकारात् । परस्य मोक्षदृष्टयभावोऽपि प्रत्यक्षेण नावसीयते हि । तच्च सूचयति ॥ **कथञ्चनेति** । सर्वेषामपि प्रत्यक्षमात्रविषया हि जात्यैव समानत्वं साधयन्वादी स्वयमपि सर्वाद्भुतत्वात्कथं विशेषमाहात्म्यवान् स्यात् । वृथेत्यादेरयमर्थः । निष्फलो धर्माधर्मविधिरिति वदन्तं लोकायतकीयं वृथा हन्याद्यदि तस्येति वचनस्य किमुत्तरम् । सत्यमेवं मद्वधान्न किञ्चित्पापमित्यत आह ॥ **स्वजीवनेति** । अत इत्यादेरयमर्थ उच्यते । उक्तन्यायेन महावैदिकस्य वेदोक्तानामर्थानां लोकानुभवप्रापकत्वात्प्रत्यक्षद्वारेणैवेदं प्रामाण्यं गम्यते । तस्मादेव हेतोर्यद्यागमस्य प्रामाण्यं नास्तीत्युच्यते तर्हि प्रत्यक्षस्यापि प्रामाण्यं नास्तीत्युत्तरम् । आगमप्रामाण्याभावे आगमोदितदृष्टफलस्य प्रत्यक्षस्याप्रामाण्यप्रसङ्गात् । तस्मात्सर्वप्रत्यक्षस्याप्यप्रामाण्यमागतम् । तर्हि विमतं वाक्यं प्रमाणं वाक्यत्वात्प्रत्यक्षोपलब्धघटादिवाक्यवदिति प्रत्यक्षमूला युक्तिर्ह्यागमस्यापि । हेतुरप्रमाणेऽपि लोकवाक्ये प्रवृत्तत्वादनैकान्तिक इत्यत आह ॥ **लोकेति** । अपौरुषेयत्वादेवाव्यभिचारः । पुरुषकृतत्वे हि व्यभिचारहेतवोऽज्ञानविप्रलम्भादयः सम्भवन्ति । तस्मादपौरुषेयवाक्यत्वं तत्र लिङ्गमित्यभिप्रायः । अपौरुषेयत्वं तु प्रागेव साधितम् । आप्तत्वसाधने आप्तत्वसाधनार्थम् । धर्मस्त्वहिंसाप्रधानः पञ्चमलधारणकेशोल्लुण्ठनादिकः । ज्ञानं नाम जीवस्य स्वरूपदर्शनमिति जैनाः प्राहुरित्यन्वयः । कथं जिनवाक्यमनुमानतः प्रमाणं स्यात् । जिनवाक्यत्वहेतोः पूर्वोक्तन्यायेन व्यभिचारात् । तद्व्यभिचारिणाऽप्रामाण्यानुमा च स्यादिति ह्युक्तम् ।

अन्यथासिद्धिमानतः प्रमाणानामुक्तलक्षणाभावे स्वरूपस्यैवासिद्धावनुभवादिप्रमाणसद्भावादतः सर्वमप्रमाणमित्यत आहाभिप्रायेण हि । प्रत्यक्षानुसाराभावात्स्वतन्त्रानुमा तत्प्रामाण्यं जिनवाक्यं वा कथं धर्मं पुद्गलं च दर्शयेत् । जिनस्यैवमयथार्थवक्तृत्वादेतद्वाक्यवत्तद्वाक्यं च सर्वमप्रमाणमित्यभिप्रायेणाह ॥ **स्वरूप इति** । वक्ति सप्रभमात्मानं देहमानं तदप्यलम् । दुष्टं नानाशरीरेषु प्रवेशादन्यथाभावादित्यादिना दोषा उक्ताः । सुखस्य दुःखाभावरूपत्वात्पुद्गलस्य च भावरूपत्वात्पुद्गलस्यानन्दरूपत्वं नैवमन्यते । इतिशब्दो हेतुत्वे । न हि घटाद्यभावतारतम्यं दृश्यत इत्यभिप्रायवानाह ॥ **मात्रेति** । न च स्यात्किं विपर्ययोऽनुभवो हि लभ्यते चेद्दुःखस्य सुखाभावरूपता न स्यात्किम् । यदि सर्वे इत्यादेरयमर्थः । न कश्चिद्भावपदार्थोऽस्माभिरङ्गीक्रियते सर्वेऽप्यन्योन्यस्वरूपाः पदार्थाः । तथा हि । घटाभावः पटः पटाभावो घट इत्यनुभवः । तस्मात्सुखमपि दुःखाभाव इति यदुच्यते तत्र ब्रूमः । घटाभावो हि पश्चाद्घटस्वभावरूपपटाभावः । एवं च भावाभावता नाम भावनैव स्यात् । तथा च सुखादीनां भावत्वस्याचलितत्वात्किमस्माकं छिन्नम् । तदेवोपपादयति ॥ **भावत्वमिति** । न च तावता भावाभावप्रसङ्ग इत्याह ॥ **प्रथमेति** । न चास्मत्पक्षे उक्तदोष इत्याशयवानाह ॥ **ईशेति** । नन्वस्मत्पक्षेऽपि सर्वस्य कर्माधीनत्वात्पञ्चानुमानपरिपाकादेवादुःखित्वमित्यत आह ॥ **कर्मेति** । कर्मणः क्वचिदपि प्रधानहेतुत्वं न घटते । चैतन्याहितत्वात्पाषाणवत् । गुणविशेषज्ञानात्प्रसन्नाद्राज्ञो निगडमोक्षलाभदृष्टान्तमत्राभिप्रेत्याह ॥ **शक्तस्येति** । विपक्षे दृष्टांतो नास्तीत्याह ॥ **स्वज्ञानादिति** । वेदाप्रामाण्यवादिना कोऽप्यर्थो निश्चेतुमशक्य इत्यभिप्रायेणाह ॥ **अहिंसाया इति** । सुखं दुःखाभाव इत्याद्यन्यथावचनादेव बौद्धानामपि शास्त्रस्याप्रामाण्यं निश्चीयते विशेषदोषादित्याह ॥ **न चेति** । यदीदानीं कथं न स यदि मोक्षो भवेत्तर्हि इदानीमेव कथं न स भवति । इदानीमपि भावनाया विद्यमानत्वात् । अन्यत्र मोक्षादन्यविषये पुत्रोत्पत्त्यादौ । वैभाषिकसौत्रान्तिकाभिमतसाधनाच्च न मोक्ष इत्याह ॥ **अन्तारिति** । विवेको भेदज्ञानमिति साङ्ख्याः प्राहुरित्यन्वयः । ईशप्रसादत ईशप्रसादान्मुख्यसाधनानङ्गीकारात् । यस्य प्रसादात्पर-

मार्तिरूपादस्मात्संसारान्मुच्यते नापरेण। नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मादित्याद्याः श्रुतयः। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतमित्याद्याः स्मृतयः। कणादयोगाक्षपादास्तु मुक्तिं ब्रुवाणास्तामीशस्य प्रसादतोऽप्याहुरित्यन्वयः। परावरे परावरदेशकालवर्तिनि। अन्यथागतेः सकलकर्मणां भोगं विनैव मोक्षस्य गतेष्वविद्यमानत्वात्। अनुग्रहान्मोक्षो घटत इति शेषः। पुरुषज्ञानतो नान्यः पन्था हि पुरुषसूक्ताख्यश्रुतौ तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत इत्यर्थर्चेनोक्तम्। यमन्तः समुद्रे कवयो वयन्तीत्युपक्रान्ताया-मब्धिशायित्वालिङ्गेन हरिविषयतया निर्धारितायां पुरुषशब्दश्च प्रयुक्तः। तस्मात्तत्रापि पुरुषो विष्णुरेव। तदाह ॥ **सर्वं इति**। विद्युतो विशेषेण द्योतकान्। ननु पुरुषशब्दस्य पुंमात्रेऽपि प्रवृत्तेरत्रोभयत्राप्युच्यमानः सामान्यपुरुषः किं न स्यादित्यत आह ॥ **न तस्येति**। विश्वतः परमं विश्वायमश्चेति विश्वतः परमः सत्यकामानां मुक्तानामपीष्टे किमुतामुक्तानामिति कैमुत्यन्यायेन सर्वस्येशानतोदिता। ननु पुरुष एवेदं सर्वमित्यस्य सर्वत्वमुदितं हि तस्मात्कथं सर्वस्योत्तमत्वमित्यत आह ॥ **यदिति**। पुरुषेणैवेदं व्याप्तं यद्भूतं यच्च भव्यमित्येकायनब्राह्मणं च तमर्थ-मुद्दिश्याह। सामानाधिकरण्यव्यवहारस्त्वयो दहतीत्यादिवद्युज्यते। सर्वं समाप्नोषि ततोऽसि सर्व इति च गीतासु। स भूमिं विश्वतो वृत्वेत्युक्त-स्यैतावानिति परामृष्टस्य व्याप्त्याख्यमाहिम्नो वचो हि पुरुषमिति। अन्नेनेति तृतीया द्वितीयार्थे। छन्दसि व्यत्ययस्य बलात्। तच्चोक्तम्। सुप्ति-ङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तयङां च ॥ व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेनेति। अत्र हि श्रीभागवतवाक्यं च प्रमाणमाह ॥ **सोऽमृतस्येति**। अत्तृत्वादन्नं जीवः। अन्नस्यान्नं मनसो मन इति प्रयोगात्। यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन इति श्रुतेरद्यत्वाद्वोभयी च व्युत्पत्तिर्दृष्टा। अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति। निगमयाति ॥ **अमृतस्येति**। अमृतस्येति पदममृतस्येत्यनुवदाति धर्मधर्म्यैक्याभिमायं द्योतयन्। यत्पाशुपतादिभिरुत्प्रेक्ष्यते ज्ञानिनोऽपि देहव्यूहेन सकलं कर्म भुञ्जत इति तन्निरस्यति ॥ **तद्यथेति**। यथैषीकातूलमग्नौ

प्रदूयतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति श्रुतिः। एतदप्येतेन निराकृतम्। इत्येतद्भाट्टमतमपि कर्महेतुत्वमित्याद्युक्तन्यायेन नान्यः पन्था अयनाय विद्यत इत्यागमेन च निराकृतम्। भास्कराद्यभ्युपगतं ज्ञानकर्मसमुच्चयं दूषयति ॥ **विनेति**। अपि सा श्रुतिरित्यपिशब्दात् **विद्यैव तु निर्धारणादिति** वेदराडपि निवारयति। यत्पदैरुच्यते नाम ब्रह्मेत्युपास्त इत्यादिप्रतीकोपास्तिरयथार्थाऽपि फलदेति तन्निराकरोति ॥ **अन्यथेति। न प्रतीके न हि सः** इति प्रभुः सूत्रकारो निवारयति। अविद्यामुपासते विद्याविरुद्धमन्यथाज्ञानमनुतिष्ठति। एकत्वविज्ञानस्त्वयथार्थत्वं मुहुरभिप्रेतम्। उक्तार्थस्य **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादिति** सूत्राभिप्रायं द्योतयति ॥ **इतीति। उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने चेत्यादि** सूत्रार्थं दर्शयति ॥ **उपासीतेति**। ब्रह्मेत्यादेरयमर्थः। ब्रह्मा तु सर्ववेदोदितैः सर्वविशेषसहितैर्गुणाक्रियांशाद्यात्मकैः सर्वैर्गुणैः सहितत्वेन विष्णुमुपास्ते। ब्रह्माणी तु तत्र क्रियाणां सामान्यत उपास्तिं कुर्यात्। अन्येषां विशेषत एव। यथा घटस्रष्टा पटस्रष्टेत्यादिविशेषान्विना सर्वस्रष्टेत्याद्युक्तः। रुद्रो गुणानां सामान्यत उपास्तिं कुर्यात्। यथा घटज्ञः पटज्ञ इत्यादिविशेषान्विनैव। सर्व इत्यादि किमुत। क्रियाणां द्रव्याणां तु विशेषत एव क्रियादीनामपि गुणान्तर्भूतत्वे सत्यपि ज्ञानादीनां गुणशब्दे पृथगुक्तिर्ब्राह्मणपरिव्राजकन्यायानुसारात्। परे पार्वत्यादयो द्रव्याणां भगवद्रूपाणामपि सामान्यत उपास्तिं कुर्युः। किमुत क्रियाणाम्। नात्र ज्ञानादीनां संहृत्यादीनां च विशेषोपास्तिविधिवैयर्थ्यमाशङ्कनीयम्। सामान्योपास्तिविधौ प्रायिकत्वात् ॥ २९ ॥ **यावदधिकारमवस्थितिराधिकारिणामिति** सूत्रं व्याख्याति ॥ **अधिकारेति। अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तमिति** सूत्रं व्याख्याति ॥ **न तावतेति**। ईर्ष्यादिरित्यादिशब्दादनादरः। केचिदेते सूत्रे अन्यथा योजयन्ति। तन्निराकरोति ॥ **न चेति**। आरब्धमात्रस्य कर्मण इति शेषः। **अनारब्धकार्ये एव तु पूर्वे तदवधेः। भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यत**

इत्युदितश्च प्रारब्धकर्मक्षयः। तद्योजना। तेन पूर्वोक्तभावेन निमित्तेन तस्य समञ्जसत्वादस्माभिरुक्तार्थ एवेति निश्चयः ॥२०॥ **यावदधिकार** मित्यारभ्य **सैव हि सत्यादय** इत्यन्तेन सूत्रजातेन प्रतिपाद्यमानमधिकारितारतम्यं बृहत्संहितावाक्येन विशिनष्टि ॥ **उषा इत्यादिना**। उषा अश्विभार्या। प्रवहो मरुच्छ्रेष्ठः। अनिरुद्धनाम मनः। सङ्कुचितज्ञ.नविज्ञानबलान्नातेजआकाशस्मरांशाःप्राणाः। वाग्वाव नाम्नो भूयसीतीत्यादिछान्दोग्योपनिषदि पठिता एवात्रोषाप्रभृतयो मारुतान्ता उच्यन्ते। तत्रेन्द्रानिरुद्धावन्तराहङ्कारिकप्राणोऽनेनोच्यते। शतरूपा स्वायम्भुवमनुपत्नी। प्रसूतिर्दक्षपत्नी। विराडानिरुद्ध-पत्नी। संज्ञा सूर्यपत्नी। प्रावही प्रवहपत्नी। मित्रवदेव परिकीर्तिता। मित्रतन्मध्ये ब्रह्म ब्रह्मपुत्रकः। मित्राग्न्योर्मध्ये मरीच्यङ्गिरःपुलस्त्यपुलहक्रतुवसिष्ठाः। अन्ये ततोऽवराः। अन्ये मनव उत्तमादयः स्वायम्भुवतापसव्यरिक्ता वैवस्वतमनोरवमाः। वैन्यो वेनपुत्रः पृथुः। हैहयः कार्तवीर्यार्जुनः। तद्वदुत्तमादिवत्। विप्रराज-न्यविशेषो विप्रजातेः क्षत्रियजातितः श्रैष्ठ्यम्। सोमाधिकारिणां शतदेवानां मध्ये इन्द्राग्न्यादय उक्ता हि। तदन्याः शतदेवताः पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः। शतदेवताभ्योऽन्ये देवास्ततः पर्जन्यादवराः ॥२१॥ **प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तमिति** सूत्रं व्याख्याति ॥ **दृष्टिरिति**। योग्यानुसारतो योग्यानुकूल्येन ॥ २२ ॥ **प्रदानवदेव हि तदुक्तम्। लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपीत्य**नयोरर्थं सूचयति ॥ **सम्यगिति** ॥ २६-२७ ॥ **पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवदिति** सूत्रं व्याख्याति ॥ **गुणाधिकमिति**। विप-र्ययस्तु गुणावरं गुरुम्। तदधिकप्राप्तिः पूर्वानुज्ञा च सर्वथा स्यादित्यन्वयः। तदुत्तमगुरुप्राप्त्योत्तमगुरोः प्राप्त्यै। गुरुर्विद्योपदेष्टा ब्रह्मा। विद्या विद्याप्रवर्तिका विद्याभिमानिनी च सरस्वती विद्यागम्याभीष्टदेवता। विष्णुस्तत्प्रसादेन कथमन्योपदेशादुत्पन्नज्ञानानां ब्रह्मा गुरुरित्यत आह ॥ **उपदे-श इति**। मुक्तये तु सर्वेषामपि ब्रह्मण उपदेशोऽपेक्षित एव ॥ २८ ॥ गुणैरुपासना गुणैः सह भगवतो ध्यानम् ॥ ३४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३—३ ॥ * ॥ * ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ ॐ **पुरुषार्थोऽतः शब्दादिति बादरायण** इत्यादिसूत्राणामभिप्रायमाह ॥ **एवमिति** । तत्तज्जात्यनुसारतः । प्रारब्धस्यानतिक्रमनिमित्तस्य पूर्वकर्मणोऽनतिक्रमणीय इति शेषः । देवानां तु मानुषादिवदनतिक्रमानियमो नास्तीत्याकूतम् । तद्विशेषा आत्रेयादिमतविशेषाः । कथं तर्हि चन्द्रादीनां क्षयादिनिमित्तस्य पूर्वकर्मणोऽनतिक्रमणीयत्वमित्यत आह ॥ **बलवादिति** । तत्र प्रायश्चित्तकर्मविशेषणत्वं ज्ञानस्येत्यादिजैमिन्याद्युक्तिः ॥ १ ॥ **स्तुतयेऽनुमतिर्वेत्या**देरर्थं सूचयति ॥ **विकर्मेति** । अकर्मतो विकर्मण एव भावात् । तथा च श्रीभागवते विशिष्टवाक्यम् । न भारती मेऽङ्ग मृषोपलभ्यते न कर्हिचिन्मे मनसो मृषा गतिः । न मे हृषीकाणि पतन्त्यसत्पथे हृदौत्कण्ठ्यवता धृतोऽहमिति । क्लृप्तस्य तु कथञ्चन चन्द्रादीनां देवानां श्रुतौ क्लृप्तस्य ज्ञानानन्दादेर्गुणस्य कथञ्चन नैव हानिरस्ति । तथाऽपीत्यादेरयमर्थः । तथाऽपि चन्द्रादिपदस्थानां श्रुत्युदितं गुणजातं निश्चितमेव । तस्माद्देवानां केनापि कारणेनात्र प्रतिपादिततारतम्यनियमोज्झितिर्नापद्यते । स्वोच्चौ बृहस्पतिमहेन्द्रौ । ननु **तदधिगम** इत्यादिना चतुर्थाध्याये उक्तो हि विकर्मालेपः । अत्रापि स एवोच्यते । अतः पुनरुक्तिः कथं न स्यादित्यत आह ॥ **ज्ञानेति** । निपाते त्रिरवाक्शिरा इति विहितप्रायश्चित्तानुष्ठानसमनन्तरमपि ब्रह्महत्यादिमतां तत्पापानुपभोग एव स्यात् । न त्वशुचित्वादिपरिहारः । ज्ञानिनस्त्वशुचित्वमसम्भाष्यत्वं च न भवेदिति ज्ञानस्य मुक्तिव्यतिरिक्तं फलं तत्रोच्यते । अत्र तु येनकेनापि वर्तमानस्यापि ज्ञानिनो ज्ञानविशिष्टफलस्य मोक्षस्यावश्यभावित्वमुच्यते । यथा विषभक्षात्प्राप्ताया मृतेः सर्वथाऽपि सर्वात्मनाऽप्यनिवर्त्याया मोहादिरूपेण किञ्चिद्भुक्ताया विषहरणमन्त्रादिसंविदोपमर्दः । तथैव प्रारब्धकर्मजातस्य फलस्य प्राप्तस्य सर्वात्मना त्वनिवर्त्यस्य किञ्चिद्भुक्तस्य भगवदपरोक्षसंविदोपमर्दश्चेह प्रोक्तः ॥ **उपमर्दं चेति** । यदि ज्ञानिनामज्ञानिनां च प्रारब्धकर्मणः सर्वात्मना भोग एव न तु फलह्रास इत्युच्यते । तर्हि ब्रह्महत्यादिप्रारब्धकर्मफलस्य क्षयादिव्याधेर्निवृत्त्य-

र्थमायुर्दीर्घव्याधेरित्यादिकाम्याविधेर्वैयर्थ्यं स्यात् । तस्माद्देवानां प्रारब्धस्यापि महानुपमर्दोऽन्येषां क्रमादून इत्युक्तनियमो भवेत् । तदाह ॥ **सर्वात्मना फलेति ।** पादमारभ्योक्तं प्रमेयं तत्र भागवते स्फुटमुक्तमित्याह ॥ **एवमिति ।** ननु देवानामन्येभ्यः प्रारब्धकर्मण उपमर्दे विशेषः । तदवभासेन मोक्षनियमेन मोक्षानुप्रवेशितत्वात् । न हि मोक्षे तेषामन्येभ्यो विशेषः । साम्यवाक्यविरोधादित्याशङ्कां परिहरति । सिंहावलोकनन्यायेन**नाविशेषादिति** सूत्रं योजयन् मोक्षतारतम्याभावं बहुवाद्यभिप्रेतं च निराकरोति ॥ **तारतम्यमिति** । स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दः । ते ये शतं मनुष्याणामानन्दाः स एकः पितृणामित्यादिका वाजसनेयकश्रुतिः । मनुष्यापितृगणार्षिकर्मदेवादीनां ब्रह्मपर्यन्तानामुत्तरोत्तरं शतगुणतारतम्यं ब्रवीति हि । यश्च श्रोत्रियोऽवृजिनोऽकामहत इति तत्र तत्र मुक्तिं निगद्य चानन्दतारतम्यमभिप्रैति । एषा च श्रुतिर्ब्रह्मादीनां फले तारतम्यं नोचेत्कथमेवं ब्रूयात् । असुप्तस्येति शब्देन मोहो गृह्यते । तस्यापि सर्वेन्द्रियप्रबोधरूपत्वात् । कामाः कामनीया विषयाः । आप्ताः पर्याप्ताः परिपूर्णा इत्यर्थः । ननु मुक्तस्य काम एव नास्ति । तस्मात्कथमकामहतशब्दस्य पूर्णकाम इत्यर्थः सम्भवतीत्यत आह ॥ **चेतनस्येति ।** अकामता कामव्यक्तिराहितता । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता । परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते । स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान्कामान्नी कामरूप्यनुसञ्चरन् । एतत्सामगायन्नास्त इति श्रुतयः । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मुक्तोऽमृतो भवतीति श्रुतेः का गतिस्तर्हीत्यत आह ॥ **कामा इति ।** मुक्तानां प्राकृतहृदादिभ्य इति शेषः । अवृजिनशब्दार्थमाह ॥ **अपापत्वमिति ।** अकामहत इत्युक्ते सति तस्मादिन्द्रादिसुखादकामत्वमिति चाश्रुतकल्पना । तत्पक्षेऽहतशब्दस्य व्यर्थत्वाच्छ्रुतहानिः । यद्यपि कस्याचिच्छ्रोत्रियस्य पुत्रवित्तादौ कामस्तथापीन्द्रादिपक्षकामाभावात्तदर्थायासनिवृत्तेरानन्दः किं न स्यादित्यत आह ॥ **कुत्रचिदिति ।** राज्यान्निवृत्तमतेश्चण्डालस्य राजसमास्तित्वादिवदनुभव-

विरुद्धमित्याशयः । निगमयति ॥ **यश्च श्रोत्रिय इति ।** चशब्देनेतश्चात्र मुक्त उच्यत इत्याह ॥ **राद्ध इति ।** राद्धो नाम संसिद्ध एव । राधसाधसंसिद्धाविति धातोः । तस्मादत्र मुक्त एवावगम्यते । बृहदारण्यकभाष्येऽप्ययमर्थो भगवत्पादैरेव । राद्धो मुक्तः । मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नाधिक्यं मुक्तौ प्राप्तुं शक्यत इत्यतः समृद्ध इत्युक्तम् । यावत्साधयितुं शक्यते तावत्साधनैः सम्पूर्ण इत्यर्थः । स्वराष्ट्रज्ञानोपदेष्टृत्वान्मुक्तावपि तेषामाधिपतिर्ज्ञानपूर्वकत्वेन मनुष्यत्वे दानादिकं कृत्वा तत्फलैरपि भोगैर्मुक्तौ सम्पन्नतमः । न ह्यस्य कर्म क्षीयत इति च श्रुतिः । अन्यथा राद्ध इति विशेषणं व्यर्थं भवति । स मनुष्याणां परम आनन्द इति स्वरूपानन्दश्चात्रोच्यते । न ह्यमुक्तानां स्वरूपानन्दानुभवोऽस्ति । भुज्यते स्वसुखं मुक्तैराभासोऽन्यैस्ततोऽपर इति चेति । अन्येषामधिपतिरित्यादौ मुक्तियोग्यौ मानुषश्चक्रवर्ती चामुख्यतयोच्यते । अथात आनन्दस्य मीमांसा भवति । युवा स्यात्साधु युवाध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्येत्यारभ्य देवगन्धर्वचिरपितृआजानादिदेवकर्मदेवतात्विकदेवेन्द्ररुद्रब्रह्मणां मुक्तानाममुक्तानां चानन्दतारतम्यं वदन्तीं तैत्तिरीयश्रुतिमत्र प्रमाणीकुर्वंस्तदर्थमभिधत्ते ॥ **साधुनेति ।** तस्येयमित्यादेरयमर्थः । तस्य मानुषचक्रवर्तिनः संसाराभावमपेक्ष्योच्यते । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्द इत्युक्त्वा पुनः श्रोत्रियस्य चाकामहतस्येति मानुषमुक्तान्मनुष्यगन्धर्वमुक्तस्य शतगुणात्मना वदति श्रुतिः । मानुषमुक्तानन्दस्तु युवेत्यादिना सर्वमुक्तानां सामान्यलक्षणान्युक्त्वा तस्येति परामृश्य तत्रैवोच्यते । तादृशगुणविशिष्टस्यैव यो रत्नादिवित्तपूर्णपृथिव्याधिपत्यसञ्जात इति चानन्द इति चार्थसम्भवात् । पुनश्च संसारगान्मनुष्यगन्धर्वादेः संसारगतस्यैव देवगन्धर्वादेः शतगुणाधिकं सुखं वदति । मुक्तान्मनुष्यगन्धर्वादेश्च मुक्तस्य देवगन्धर्वादेरिति श्रुतिव्याख्यानं युक्तं स्यात् । यत्र साधनबाहुल्यं कृष्यादौ तत्र तत्र साध्यबाहुल्यमपि दृष्टम् । मुक्तवत्स्वभावत एव प्रवर्तन्त इत्यत आह ॥ **कृच्छ्रेणेति ।**

विमोक्षाय विविधमोक्षाय । दैवी सम्पद्विमोक्षाय ज्ञानभक्त्यादिलक्षणा । साधनसम्पद्विमोक्षाय तारतम्यविशिष्टमोक्षायेत्यर्थः । तमेवंति भागवते आत्मवृत्तिभिः परमात्मनि वर्तमानैस्तदर्पणबुद्ध्या कारणान्मनआदिभिः स्वविहितकर्मभिः । अक्षण्वन्त इत्यादिश्रुतेरयमर्थः । सखाय एककालमुक्ता ब्रह्मादयोऽक्ष्यादिसर्वेन्द्रियवन्तो ज्ञानवेगेष्वसदशास्तारतम्यवन्तो बभूवुः । आदध्नास ईषत्परिमाणाः सुधासमुद्रौ गुल्फजान्वादिदघ्ने विहर्तुं योग्यताविशेषवन्तः । केचित्कक्षदघ्नसुधाः केचित्सुधायां यथेष्टं स्नानशीला ह्रदसम्बन्धा ह्रदा इव ददृशिरे । श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः । अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गणाः । तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा । क्षीरसागरदघ्नास्ते केचित्तिष्ठन्ति मुक्तिगाः । उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् । ऐरोह्रदे केचिदपि देवा एव सदा हरिम् । नागभोगशयं मुक्ता ददृशेऽधिकमोदिताः । सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हीति ब्रह्मसारे । नन्विदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति ब्रह्मसाम्यमुच्यते हि सर्वमुक्तानाम् । अतः कथं तेषां तारतम्यमित्यत आह ॥ **दुःखादीनि** । चशब्दोऽवधारणे । सति हि गुणे प्रवदन्त्यतुल्यतामिति शान्तिपर्वणि । दुर्ज्ञेयमिति वैहायससंहितायाम् । उत्साहः प्रयत्नः । व्यवसायो निश्चयः । अतीतानागते जानन्तीत्यतीतानागतज्ञानाः । ध्वंसो विषादः । कस्तमिति कठवल्ल्यां यमवाक्यम् । मदामदं सुरासुराणां हर्षकाहर्षकम् । सुरमुनिमनुजानां योग्यानां ज्ञानित्वे सत्यपि मर्त्यादयो न जानन्तीति वचनं देवादिवन्न जानन्तीत्यभिप्रायेण हि । तस्मादेषु वाक्येषु ज्ञानादिसाधनतारतम्यमवगम्यते । मुक्तानामिति भागवतवाक्यस्यायमर्थः । मुक्तानां मध्येऽपि ये व्याप्तिदर्शनादिमहासाधनैः सिद्धास्तेषां मध्येऽपि नारायणपरायणो निरुपाधिकभक्त्या नारायणैकशरणः सुदुर्लभो ब्रह्मादेरेव तादृशत्वात् । इयमित्यादेर्मन्त्रवाक्यस्यायमर्थः । यत इयं विविधासुरादिसृष्टिराबभूव स ब्रह्मैव । यदि वा जगद्दधे यदि वा न दधे

विषयविभागापेक्षया भगवदनुग्रहापेक्षयैकदेशापेक्षया च विधिरन्यथा निषेधः। यः स्वात्मेत्यादि भागवतवाक्यानि। तत्र प्रथमं ब्रह्मवाक्यम्। नमस्त इति च। आत्ममायाविभवं स्वयं गतः समहिमसम्पदं स्वयमेव ज्ञातवान्। अमितत्वाय सम्पूर्णस्वरूपाय। सूतत्रे सष्ट्रे। यत्काष्ठां यत्पूर्णताम्। नाहं परायुरिति रुद्रवाक्यम्। ईशेति विष्णोः सम्बुद्धिः। अहं महेन्द्र इति यमवाक्यम्। ब्रह्मा सवर्स्य जगत आदौ स्मृतः कालतो गुणतश्च। तस्माद्देवाद्विष्णोरन्तरश्चातो जगतः। न त्वामिति भागवते ब्रह्माणमुद्दिश्य भगवद्वाक्यम्। मनुष्याणामित्यादीनि गीतावाक्यानि। सिद्धानां मुक्तानाम्। ध्यानेनेत्यादेरर्थः श्रीमन्मध्वदेवेनैव गीतातात्पर्ये सप्रमाण उक्तः। अनादियोग्यताभेदात्पुंसां दर्शनसाधनम्। नानैव तत्र विष्णोस्तु प्रसादाद्वैष्णवं वपुः। स्वयं विज्ञायते किञ्चिच्छ्रूयते किञ्चिदन्यतः। तथा ज्ञात्वा हरिं ज्ञात्वा स्वान्तः पश्यन्ति केचन। ऋषयः केचिदृषयो नारदाद्या बहिस्त्वपि। देवा विष्णुप्रसादेन लब्धसत्प्रतिमाबलात्। सर्वं क्रमेण विज्ञाय प्रतिभास्पष्टता क्रमात्। पश्यन्ति बहिरन्तश्च विष्णुं ध्यानमृतेऽपि तु। येषां ध्यानमृते दृष्टिस्तेषां ध्यानेऽपि दर्शनम्। स्यादेव साङ्ख्ययोगास्ते देवा ब्रह्माधिकोऽत्र च। केचित्तु क्षत्रियपरा अश्वमेधादिकर्मभिः। यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम्। श्रवणप्रतिभाभ्यां च स्मरन्तः पुरुषोत्तमम्। पश्यन्त्यन्ये तथाऽन्येभ्यः सर्वं श्रुत्वानुमत्य च। उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन। ऋषीन्द्राज्ञस्तथारभ्य प्रतिभा ह्यधिका क्रमात्। यावद्ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम्। विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो नरैः। अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम्। अत्यल्पप्रतिभानत्वान्मानुषाः श्रुतवेदिनः। सर्वे ते दर्शनात्तस्मात्स्वयोग्यान्मुक्तिगामिनः। अन्येषामपि किञ्चिच्छ्रवणे विद्यमानेऽपि मनुष्याणामल्पप्रतिभात्वाच्छ्रुत्वाऽन्येभ्य इति विशेषणम्। श्रुतिपरायणा इतीति मोक्षतारतम्यनिमित्ते दर्शनतारतम्ये प्रमाणं सुसूक्ष्मैरिति। श्रुतिमप्याह। न तु सर्वैः स्वरूपैस्तं पश्यन्तीत्यन्वयः। वाणी तु पञ्चाशत्कोटियोजनविस्तीर्णं ब्रह्माण्डप्रदेशमारभ्यापोतेजोवाय्वाकाशाहङ्कारमहत्त्रैगुण्यप्रदेशेषु क्रमाद्दशगुणेषु ब्रह्मांडावरणरूपेषु व्याप्तं ततः परतश्च शतगुणं परतोऽपि

व्याप्तं हरिं पश्येत् । मुक्तामुक्तविशेषस्तु सर्वत्राप्यनुगन्तव्यः । तमोमात्रगतं ब्रह्मांडप्रदेशमारभ्य तमःप्रदेशपर्यन्तं व्याप्तं नातो बहिर्महत्तत्त्वं । यावदित्यादेरप्ययमेव न्यायः । इम इत्यादेरयमर्थः । लक्ष्म्यादिभिः पूर्वोक्तैर्दृष्टेभ्यो वासुदेवस्य गुणविशेषेभ्य एकांशेनैव पश्चादुक्ता ब्रह्मादयः पश्यंति । यावद्गुमा तावत्पर्यन्तं साधनानां विमुक्तैरिति शेषः। तेन साध्यसाधनवैरूप्येण । तथा हि । अनन्तगुणविशेषानुपासितवतां दशकल्पकालं लवणार्णवमज्जनादितपः कुर्वतां रुद्रादीनां चतुर्गुणोपास्तिमतामल्पव्रतानां मानुषाणां च समं सुखं ददतः परस्य वैषम्यनैर्घृण्ये स्यातामेव । **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति । न कर्माविभागादिति चेन्नानादित्वात् । उपपद्यते चाप्युपलभ्यते चेति** हि सूत्राणि । तत्तस्मान्मायिनां लिङ्गत्वात् । ननु मुक्तानामुच्चावचत्वे द्वेषेर्ष्यादयः प्रसज्यन्ते । तस्मात्समत्वं कल्प्यत इत्यत आह ॥ **निःशेषेति** । अत्रेर्ष्यादिषु बुद्ध्यादीनामात्मगुणानां विनाशादन्यदर्शनाभावात् । अनुमत्यादिरित्यादिशब्दाद्भयम् । कथमन्यदर्शनादाविच्छारहितस्य तदभावादरतिरित्यत आह ॥ **यदीति** । मोक्ष ईर्ष्यादिनिवारणार्थं निष्प्रमाणकाया दर्शनेच्छाद्यभावकल्पनायाः श्रुत्युदितनिर्दोषत्वाङ्गीकारो वरीयानित्यर्थः । युक्तिमानिना युक्तिज्ञोऽहमस्मीत्यभिमानिना । कथमनुमानं विनाऽऽगममात्रेणैवार्थसिद्धिरित्याशङ्कां परिहरति ॥ **मोक्ष इति** । ननु चेतनत्वहेतुरतिप्रसङ्गी । उक्तन्यायेन मोक्षेऽपि दुःखादीत इत्यप्यनुमातुं शक्यत्वादित्यत आह ॥ **न चेति** । तरति शोकमात्मवित् । तीर्णो हि तदा सर्वान् शोकान्हृदयस्य भवति । तद्वै देवं मनो येनानन्धेव भवत्यथ न शोचति । सर्वे नन्दन्ति यशसा गतेन समासाहेन सख्या सखायः । किल्बिषस्पृक् पितुषणिर्ह्येषामरंहितो भवति वाजिनायेति कीर्त्या व्याप्तेन प्रतिभादिगुणैः । सभाविजयिना चेतनस्य सख्येश्वरेण सर्वे मुक्ता नन्दन्ति । एषां दुःखनिमित्तककिल्बिषस्पर्ध्यमृताद्यन्नदातेन्द्रियगणाय तद्विषयभोगदानेनातिशयेन हितो भवति हि । यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठतीति च श्रुतिः । निर्दुःखत्वादीत्यादिशब्दाद्यथेष्टकामभोगः ॥ ४ ॥ **सर्वथाऽपि तु त एवोभयलिङ्गा**दित्यधिकरणाभिप्रायमाह ॥ **अनादीति** । नित्यदुःख-

योग्यतायाः कलिरवधिः । नित्यदुःखिनां भगवद्द्वेषिणामसुराणां मध्ये तस्यातिशयितत्वात् । नित्यसुखयोग्यतायास्तु ब्रह्माऽवधिः । नित्यसुखयोग्यानां भगवद्भक्तानां देवानां मध्ये तस्याधिकत्वात् । विमतः काले हरिर्ब्रह्मपदयोग्यव्यतिरिक्ताज्जगतो विवक्षितब्रह्मण आधिक्यवान् कालत्वादेतत्कालवत् । ब्रह्माऽधिकसाध्योऽधिकसाधनत्वात्सम्मतवदित्यादिकमनुमानं प्रमाणं भवेद्धि । अनुमानैकशरणस्य वादिनोऽपि तदाह ॥ **ब्रह्मण इति ।** नन्वेतत्कालत्वे ब्रह्मणो मुक्तरुद्रादेराधिक्यात्साध्यविकलोऽयं दृष्टान्त इत्यत आह ॥ **रुद्रादिष्वपीति ।** मुक्तरुद्रादिष्वपि चान्यशब्दस्य योग्यत्वान्न दोषाय । तत्र हेतुमाह ॥ **उत्तमत्वमिति ।** मुक्तानां रुद्रादीनामिति शेषः । अयं वीर एवं श्रूयते । उग्रमुग्रमसुरवर्गं तमसि दमायन् । शान्तं शान्तं देववर्गं संसारमतितार्य सम्यङ्मोक्षयन् स्वयोग्यतातिरेकेण वर्धमानं ततः प्रच्यावयन् परमेश्वरो मनुष्यप्रजाः स्वर्गनरकादौ प्रेङ्खयतीति पूर्वेषां पूर्वदेवानामसुराणां सख्यानि तेषामात्मनि द्वेषमुत्पाद्य परां छिनत्ति । विशेषेण त्वरमाणो परैर्देवैः सख्यान्येति । सम्यग्ज्ञानरहिताः प्रजा असुराख्या अन्धन्तमसेऽवघून्वानः परमेश्वरोऽतीतवत्सरानेव क्रियासमभिव्याहारेण तरति । तस्मादुपर्यप्येवमेवेत्यर्थः । पृषतः समर्थो भगवान् कृष्णाजास्तामसीप्रजा हेयं भागं स्वलोकादपासेधवच्छिन्नं शम्बरं च लोकभेदकौ मायादिभिराच्छादयन्तौ जलसमूहरूपे पङ्किले तमस्यपीडयत् । स एव भूतिनामाऽपि ज्ञानैश्वर्यादिभूतितः । अज्ञानादिप्रदातृत्वात्स एवाभूतिनामकः । सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् । उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः । बभूवुः सुखसज्ज्ञानपूर्वैः सर्वैर्गुणैर्युताः । देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः । स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति । भूःशब्दार्थो भूतिरिति वैपरीत्येन चासुराः । अभूतिकारणोऽस्माकमैश्वर्यादिगुणोज्झितः । इत्येवोपासते तस्मात्पराभूताश्च तेऽखिलाः । ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथेत्यैतरेयसंहितायाम् । इदं शरीरे भूतेषु विलापयति केशवः । अविद्यां चैव जीवस्य गमयेज्ज्ञानसर्जनात् । स्वर्णकारो यथा स्वर्णमेवमग्नौ निहत्य च । शुद्धेन तेन च स्वेष्टं कुरुते

रूपमञ्जसा । एवं स भगवान्विष्णुर्जीवस्त्वर्णस्य यन्मलम् । अविद्याकामकर्माधमात्माग्नौ सर्वनाशकृत् । स्वेच्छया कुरुते रूपं यद्योग्यं तस्य मुक्तिगम् । पितृजीवस्य पित्र्यं सगान्धर्वं तस्य चैव हि । दैवं देवजीवस्य प्राजापत्यं प्रजापतेः । ब्रह्मणो ब्राह्ममेवेति नित्यानन्दस्वरूपकम् । न योग्यतां विना क्वापि पूर्वज्ञानश्रुतेः सदा । यदा मुक्तो भवेद्ब्रह्मा तदा ब्रह्मा स मुच्यतः । एवं प्रजापतिश्चैव तथैवान्येऽपि सर्वशः । यथा हि स्वर्ण-रूप्याद्यं मलहानौ तद्भवेत् । पूर्वं तु योग्यतामात्रं द्विजत्वं बालके यथेत्यध्यात्मे । प्रयान्तीत्यादि पाद्मे । अवजानंतीति गीतासु । द्वौ भूतसर्गौ भूपेति विष्णुधर्मे । देवानामिति वामनपुराणे । ज्ञायतेऽनादियोग्यता । ब्रह्मादीनां सतां कल्यादीनामसतां च मध्यमानां मानुषाणां च मिथो विलक्षणत्वेन व्यभिचारिण्यनादियोग्यता ज्ञायते । एक इत्यादेरयमर्थः । यदि पूर्वं कदाचिदप्यदृष्टो विष्णुभक्तिज्ञानादिविशेष आकस्मिकत्वेन केषुचित्पुरुषेष्वित्यतस्तर्हि सर्वसुखदुःखादिविशेषाणामाकस्मिकत्वं स्यात् । अयं सार्वत्रिको विशेषो दृष्टो देव इत्यभ्युपगम्यते चेत्तस्यानादियोग्यताविशेषस्य बीजाङ्कुरपरस्परन्यायेन सजातीयादृष्टपरम्परानिमित्तस्य साधनविशेषक्रमेण वर्धमानस्य कथमनादित्वं स्यात् । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति हि श्रुतिः । जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तच्चैवाभ्यस्यते पुनः । हिंसाहिंसा मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते । कर्मणा मनसा वाचा यदभीष्टं निषेवते । तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् । सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यतीत्यादि च । ननु केषाञ्चित्त्वयोग्यस्य भगवदवताररूपस्य दर्शनान्मोक्षो विवक्षितो हि । तच्च मूलरूपाभिन्नत्वेन बंधभेदादिमत्त्वेनैव च दृश्यते । तथा च मोक्षे द्वेषान्मोक्षः किं न स्यात् । अमोक्षे तु तद्वदेव भगवद्दर्शनं सर्वमोक्षसाधनं स्यादित्याशङ्कां प्रमाणवचनपूर्वकं परिहरति ॥ न चेति । यथा कृष्णादेः स विष्णुरेवाहमिति प्रत्यभिज्ञैव । तथा ब्रह्मदर्शिनामपि स विष्णुरेवायं कृष्ण इति प्रत्यभिज्ञैव दृश्यते न तु चैत्रमैत्रयोरिव कृष्णविष्णुरूपयोर्भेदो दृश्यते । विशेषस्तु दृश्यतां नाम । एषामब्रह्मदर्शिनां तेन भगवता मुष्टदृष्टित्वात्प्र-

स्यभिज्ञा च नास्ति। तेऽपि भेदं प्रकर्षेण नैव पश्यन्ति। धर्मिप्रतियोगिनोर्भगवद्रूपयोरेव सम्यग्दृष्टत्वात्। न हि केवलागमगम्ययोर्भगवद्रूपयोः प्रत्यक्षमात्रे सम्यग्दर्शनम्। आगमानुगृहीतप्रत्यक्षेण दर्शनं चेदुपजीव्यप्रमाणविरुद्धं भेददर्शनं नैवोदेति। ननु जीवात्मरूपगुणशीलवयोनुरूपसीताभिधां श्रियमुरस्यभिलभ्यमानां। मार्गे व्रजन्भृगुपतेरनयप्ररूढं दर्पं महीं कृतवतो हृतराजबीजामित्यादिपुराणवचनाद्भगवद्रूपयोः परस्परस्पर्धादिदर्शनात्कथं भेदो न स्यादित्यत आह ॥ **पुराणगामिति**। नेह नानाऽस्ति किञ्चनेति हि वेदः। देवदत्तादिदृष्टवद्यथा विष्णुमित्रविषया देवदत्तोऽयमिति दृष्टिरपरीक्षिता पुनर्नायं देवदत्तो विष्णुमित्र एवेति परीक्षापूर्वदर्शनं निषेद्धुं नैव शक्नुयात्। तद्वदत्राप्यधीशितुः परीक्षापूर्वदर्शने सति वेधविषयत्वादिदूषणं नैव दृश्यते। अत्र मानमाह ॥ **निर्दोषमिति**। अद्राक् अद्राक्षीत्। परीक्षितस्यैव प्रामाण्यनियमे परीक्षीयाः प्रमाणान्तराधीनत्वात्तस्याप्येवं तस्याप्येवमित्यनवस्था स्यादित्यत आह ॥ **न परीक्षेति**। न ज्ञानेत्यादेरयमर्थः। इदं रजतमिति ज्ञानमासीन्ममेत्यादिरूपेण ज्ञानस्य दर्शनं वर्तते। न तावता तस्य ज्ञानस्य प्रामाण्यं निश्चेतुं शक्यते। क्वचित्क्वचिन्मानसस्य दर्शनस्यापि सम्भवात्। सुखादिषु ज्ञानस्येति शेषः। कथं साक्षिणि विश्वासः। तस्यापि परीक्षार्थं परापेक्षत्वसम्भवादित्यत आह ॥ **स्वप्रामाण्यमिति**। अहमिममर्थं सम्यगेव जानामीति ज्ञानस्य ग्राहकेणैव साक्षिणा स्वप्रामाण्यानुभवात्कथं दोषभावो निश्चीयत इत्यत आह ॥ **दोषाभाव इति**। क्वचिदेव साक्षिणा निश्चितत्वं न तु प्रमाणाभासेषु। एवं दोषाभावे सति प्रमाणानां प्रामाण्यनियमात्परतो दोषादप्रामाण्यमित्यायातम्। प्रामाण्यं तु स्वत एवेत्याह ॥ **स्वत इति**। मानानां मानत्वेन प्रतीतानां तत्तत्र परीक्षितमेव प्रमाणं नान्यदित्यनुभवारूढम्। दोषाभावादिकमित्यादिशब्दात्प्रामाण्यम्। फलितार्थमाह ॥ **तत्परीक्षितेति**। विष्णवीत्यत्र ऐरौङादेशाभावास्तु यत्सोममिन्द्रविष्णवीत्यादिवदुपपद्यते। कथं वेदद्रष्टॄणामुचितो वैदिकप्रयोगोऽत्र वर्तत इति च नाशङ्कनीयम्। करतलविलसितमहामाणिक्यवदनाद्यनन्तकालमनाद्यनन्तवेदानवलोकयतः सर्वलोकगुरोः श्रुतिपतिभगवत्तमशिष्यसत्तमसमितिचूडामणेर्महाव्याकरणसिद्धां

वैदिकीं लौकिकीं च भङ्गीं प्रकाशयतो मध्वदेवस्यैवंविधाः प्रयोगा युज्यन्त एव। अपरीक्षिततद्दृष्ट्या दोषदर्शनमात्रेण दोषाशङ्कायामतिप्रसङ्गः स्यादित्यभिप्रायेणाह ॥ **अपरीक्षितेति**। स्यात्किम्। प्रत्यक्षादागमस्य प्राबल्ये कथमादित्यो यूप इत्यादेर्गौणार्थकल्पनेत्यत आह ॥ **तत्प्रत्यक्षेति**। तत्तत्र तदन्यत्र विपर्ययः। यत्रागम उपजीव्यस्तत्रागमविरुद्धार्थप्रत्यक्षस्यापि न मानता। अत्रागमस्योपजीव्यत्वं दर्शयति ॥ **आगमेन हीति**। वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नरसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाऽहममितोऽहमनन्तोऽहमित्याद्यागमेन ह्यस्य कृष्णादेर्विष्णुत्वं ज्ञात्वाऽत्र विरुद्धादिदोषः कल्प्यते। आगमेन विष्णुरिति न ज्ञायते चेद्विष्णोर्दोषवत्त्वं न ज्ञातं स्यात्। कश्चित्कृष्णादिनामा दोषवानित्येव ज्ञातं कथं श्रीवत्साङ्कचतुर्भुजत्वादिलक्षणवत्त्वाद्विष्णुत्वेन हि निश्चितस्य कृष्णादेर्दोषवत्त्वे ज्ञातेऽन्यस्यैव दोषवत्त्वं कथं ज्ञातं स्यादित्यत आह ॥ **शास्त्रसिद्धमिति**। शास्त्रसिद्धं हि विष्णोः श्रीवत्साङ्कत्वादिलक्षणम्। तस्मात्तेन दोषः कल्प्यते चेदुपजीव्यविरोधादेवाप्रामाण्यमित्याशयः। तदेव स्पष्टयति ॥ **कस्यचिदिति**। ननु स मया दृष्टो विष्णुर्न मानव इत्यत उपजीव्यविरोधात्कथं तस्य प्रामाण्यमित्यत आह ॥ **यावदिति**। यथा शुक्तिपरीक्षायां कृतायां शुद्धत्वेन निश्चितस्योपजीव्यस्य बाधन एवोपजीव्यप्रमाणविरोधाख्यो दोषः। अशोधिते बाधिते सत्यपि स दोषो न स्यात्। तास्मिन्प्रमाणेऽप्युजीव्यांशमात्रं न बाध्यत इत्यत आह ॥ **भ्रम इति**। यथा शुक्तिशकले इदं रजतमिति प्रतीते परीक्षया तद्गतमिदमंशमात्रमुपजीव्य नेदं रजतमिति बाधकज्ञानवृत्तिरेवमत्रापि बाधकज्ञानवृत्तिः स्यात्। स्यात्किम्। योऽयं कृष्णो मानुषत्वेन निरूपितः स विष्णुरेवेत्यत्र यथाऽयं कृष्ण इत्येतावदुपजीव्यमानवत्त्वं विहाय विष्णोः कृष्णमात्रैक्यं लक्ष्यते। तथाऽस्माभिरपि यः सर्वज्ञः सर्वविदित्यत्रोक्तज्ञानमात्रमुपजीव्य सर्वविषयत्वादिकमपहाय तत्त्वमसीत्यादिना चैतन्यमात्रैक्यं लक्ष्यत इत्यत आह ॥ **न चैवमिति**। सुपरीक्षिते यः सर्वज्ञ इत्यादिप्रमाणे एवं भ्रमाभ्रमविभागो नास्त्येव। सर्वस्याभ्रमविषयत्वात्। तत्सर्वमुपजीव्य हि तत्त्वमस्यादिप्रमाणम्। तत्सर्वज्ञत्वादिलक्षणं त्वदन्तर्यामीत्यन्तर्याम्यैक्यमुपदिशद्वर्तते।

यस्मात्कस्माच्चिल्लक्षणादिति शेषः । न हि वस्तुत्वादयः सामान्यधर्मा व्यावर्तका इत्याकूतम् । स्वरूपस्यैवोपजीव्यत्वमङ्गीक्रियते तर्हि तत्रोच्यते । एतस्मादित्यादिवस्तु यावता लक्षणेनैतस्माज्जगतो व्यावृत्तत्वेन ज्ञातं भवेत् । तावता विशिष्टस्य स्वरूपस्य हि सर्वत्राप्युपजीव्यत्वं तस्मादत्रापि तथा स्यात् । तस्मात्स्वरूपशब्दस्यापि स्वरूपलक्षणान्विताभिधायित्वात् । स्वरूपश्चायं सत्त्वादिसामान्यलक्षणानां कथं स्वरूपत्वमित्यत आह ॥ **विशेषेति** । पूर्णत्वसर्वज्ञत्वादीनां विशेषलक्षणतया सत्त्वादीनां सामान्यलक्षणतया च वस्तुनः स्वरूपत्वं विशेषादेव सम्भवेत् । वस्त्वन्तरसदृशलक्षणमेव हि सामान्यलक्षणं नाम । न पुनरनुवृत्तधर्मः । ननु व्यावृत्तमेवोपजीव्यत्वं चेत् क्वापि भ्रमो नाम न स्यात् । न हि देवदत्तादिषु चैत्रादिभ्यो व्यावृत्त्या प्रतीतेषु चैत्राद्यध्यासः स्यादित्यत आह ॥ **पुरोवर्तित्वेति** । पुरोवर्तित्वपूर्वाण्यपुरोवर्तिभ्यो घटादिभ्यश्च व्यावर्तयति । चैत्यादिसादृश्यवतश्चैत्रमात्रादिना मायिब्रह्मणः सर्वविशेषरहितत्वाद्यस्मात्कस्माच्चिद्वदाद्यर्थादपि तत्किं लक्षणं व्यावर्तयति । किमपि व्यावर्तकं लक्षणं नापेक्षते । ब्रह्ममात्रं त्वमसीत्युपदिश्यते चेत् । ब्रह्माणि जीवाः सर्वेऽपीति वचनात्त्वंपदार्थस्यापि ब्रह्ममात्रत्वाविरोधाद्भेदवादिनोऽपि सिद्धत्वात्तत्सिद्धसाधनम् । अस्ति हि चिन्मात्रत्वं जडव्यावर्तकं ब्रह्मण इत्यत आह ॥ **चिन्मात्रत्वमिति** । तर्हि चिन्मात्रभेदासाध्ये सत्यपि चेतत इति चेतनश्चेतनत्वादयं ज्ञातृत्वं च ज्ञेयवर्जितत्वेन घटते । ज्ञेयाङ्गीकारे तस्याद्वैतहानिः । स्वाख्यज्ञेयाङ्गीकारे नाद्वैतहानिरित्यत आह ॥ **स्वज्ञेयत्वमिति** । सविशेषतः स्वयमेव ज्ञाता ज्ञेयश्चेति सविशेषत्वप्रसङ्गतः । स्वशब्दविषयत्वमात्रेऽङ्गीकृतेऽपि सविशेषत्वं स्यादित्याह ॥ **स्वशब्द इति** । तच्चेत्यादेरयमर्थः । यदि स्वरूपमित्युक्ते स्वशब्दस्य वैय्यर्थ्यम् । तर्हि तत्स्वरूपस्वरूपयोः सामान्यतया वचनमित्यायातम् । न स्वरूपाभिधायि स्यात् । ननु नास्माभिश्चेतन इत्यङ्गीक्रियते चैतन्यमात्रमेव ब्रह्मेत्यत आह ॥ **चेतनस्येति** । भोजनादीनामनित्यत्वाद्भोक्तृभोज्यापेक्षा स्यात् । अस्य तु जन्यज्ञानव्यतिरिक्तस्य ज्ञप्तिशब्दापरपर्यायत्वस्य नित्यत्वादिदं ज्ञातृज्ञेयनिरपेक्षमपि स्यादित्याशङ्क्य परिहरति ॥ **नित्यत्वादिति** । नित्यत्वस्य च

तादृशत्वेऽतिप्रसङ्गमाह ॥ **नित्यवागिति** । द्रष्टार एव वक्तारो मुख्यवचनस्य दर्शनपूर्वकत्वात् । ननु प्रलये तेषामभावाद्वाच्यवक्तृविहीना नित्यवागित्यत आह ॥ **नित्य इति** । ब्रह्मणोऽन्यस्य बाध्यत्वेनावस्तुत्वादसापेक्षस्य विज्ञानस्य चावस्तुत्वप्रसङ्गादन्यापेक्षत्वमिति ह्युच्यते । तच्च न युक्तमित्याह ॥ **किञ्चेति** । प्रपञ्चो यदि विद्येत निवर्तेत न संशय इति हि सर्वमिथ्यात्वे मानमित्यत आह ॥ **उपपत्तीति** । तस्मिन्नर्थे उपपत्तिविहीनस्य वाक्यस्यार्थो न ज्ञायेत । विद्वद्भिः प्रत्यक्षमबाध्यं गगनादिविषयम् । उपपत्तिरोङ्कारं पादशो विद्यात् । ॐकारो विदितो येन स मुनिर्नेतरो जन इति वेद्यवेदककर्मकतृव्यपदेशादिका विश्वं सत्यमित्याद्या बहव आगमाश्च विरुद्ध्यन्त इति यत् । ॐमित्येतदक्षरमुपासीतेत्युपास्योपासकभेदेनोपक्रमादिलिङ्गविरोधतश्च । यस्मिन्वाक्ये सोऽर्थो न समस्त्येवेति यत् । तस्मात्स प्रपञ्चमिथ्यार्थ एव कथं ग्राह्यः । प्रत्यक्षाद्यविरोधिनि प्रपञ्चस्यानादिनित्यत्वाख्येऽर्थे पूर्वोक्तन्यायेनोपपन्ने सति यः सर्वज्ञ इत्यादेश्च सर्वज्ञत्वगुणप्रतिपादनरूपे मुख्यार्थे सति कुतो लक्षणावृत्त्याऽनन्यगतिकल्पनया सार्वज्ञ्यं निषिध्यते । विचारितान् बहूनर्थानपि निगमयति ॥ **अत इति** । सिंहावलोकनन्यायेन पुनरपि मुक्तानां तारतम्यसाधनद्वारेण ज्ञानिशुभस्य मोक्षानुप्रवेशित्वेनाक्षयफलं साधयन् शमदमाद्युपेतः स्यादित्यादेरभिप्रायमाह ॥ **ज्ञानिन इति** । ननु ज्ञानिनः प्रयोजनमनुद्दिश्य लीलात्वेनैव शुभं कुर्वन्तीत्यत आह ॥ **कृच्छ्रेणेति** । स्यात्किम् । पूर्ववासनाबलात्कृच्छ्रेणापि शुभप्रवृत्तिः स्वभाव एव ज्ञानिनामित्यत आह ॥ **न चेति** । ज्ञानिनो भयपूर्वप्रवृत्तिः कृच्छ्रेणाचरणं च न फलार्थं किन्तु स्वभाव एव चेत् । अज्ञस्यापि तथा भवेत् । कर्मणा ज्ञानमातनोतीति ज्ञानेनामृतीभवतीत्यज्ञप्रवृत्तेः फलवत्त्वे प्रमाणमस्तीति चेत् । ज्ञानिप्रवृत्तेः फलवत्त्वेऽपि समं हि तत् । तत्प्रमाणमाह ॥ **निष्काममिति** । ब्रह्माभ्येत्यन्येभ्योऽधिकत्वेन ब्रह्म प्राप्नोति । यदि ह्वा अप्यनेवंविन्महत्पुण्यं कर्म करोति । तद्धास्यान्ततः क्षीयत एव । आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते । यदेव विद्यया करोति

श्रद्धयोपनिषदा । तदेव वीर्यवत्तरं भवतीत्यादिवाक्यसामर्थ्याज्ज्ञानिनां शुभफलवत्त्वे मुक्तावानन्दोद्रेकस्योपलभ्यमानत्वात् । ज्ञानिनां शुभस्यापि सर्वस्यापि वैचित्र्यदर्शनात्तत्फलसुखस्यापि वैचित्र्यसम्भवात् । विमुक्तिगं तारतम्यमवगम्यते । आदिशब्दादथातो विष्णो विदुषा विदध्यास्तोमो य अश्वराज्ये हारिष्मतेति । स य आत्मानमेव लोकमुपास्त इत्यज्ञानस्यैवोपासकस्य फलमुच्यत इत्यत आह ॥ **न चात्रेति** । आदित आदिकालादारभ्य प्रवृत्तम् । ननु जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिर्नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत इत्यादौ सर्वशुभं भक्तिकारणमुच्यते हि । तस्मात्कथं शुभबाहुल्यं ज्ञानबाहुल्यं कारणमित्यत आह ॥ **ज्ञानस्येति** । भक्तिस्तु ज्ञानवचनेनैव परिगृह्यते । ज्ञानस्य भक्त्याख्यांशवत्त्वात् तदेवोपपादयति ॥ **ज्ञानस्यैवेति** । इत्यभिप्रायत एवं भक्तेरपि ज्ञान एवान्तर्भाव इत्यभिप्रायतः । मयि चानन्ययोगेन भक्तिरव्यभिचारिणीत्याद्युक्त्वाऽध्यात्मज्ञानानित्यत्वं तत्त्वज्ञानार्थदर्शनमित्युदीर्यते च । सोऽयं विशेषः । उक्तार्थे मानमाह ॥ **चेतनस्येति** । भगवद्गुणेष्वेव तात्पर्यं न तु दोषेषु । दोषवेदनस्य द्वेषापरपर्यायस्याप्रसादजनकत्वादित्यभिप्रायेणाह ॥ **भक्त्येति** । आगमाः पञ्चरात्राद्याः । तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा । स्नेहात्कामेन वा युञ्ज्यात्कथञ्चिन्नेक्षते पृथगिति वचनाद्यथाकथञ्चिद्द्वेषादिनाऽपि भगवति मनो योक्तव्यमेवेत्यत आह ॥ **स्मर्तव्य इति** । स्मर्तव्यः सम्यगिति पुराणे वर्तमानं वाक्यम् । द्वेषाद्गुणानाहेव । यथा पिता पुत्र औषधं पिबेति प्रोक्तेऽप्यकुर्वाणे सति क्रुद्धः स्वक्रोधप्रकटनेन स्वोक्तं कारयितुं म्रियस्वेति वदति । एवं भागवतादिपुराणगं वाक्यं वैरेणापि तत्र मनो युञ्ज्यादिति वदति । यदनिन्दात्पितेत्यादिना स्वविरोधविलोमत्वेन द्वेषनिमित्ताप्रसन्नत्वेन सर्वार्थरूपं हि महातात्पर्यम् । सर्वश्रुतिस्मृत्यर्थस्वरूपेण हि महातात्पर्यं विषयो नाम । एकशब्दस्य संशये वैरानुबन्धेनेत्येकशब्दस्यार्थसंशये सति । ननु तस्मादित्यादेरर्थान्तरमुक्तं भागवतटीकायां भगवतैव । यस्मादेवं कोऽप्युपद्रवो नास्ति भगवतस्तस्मादेवं द्वेषादिना मनो योक्तुं शक्यते तादृशानां तदेव चिन्तयति । अन्यथाऽऽत्मनो दुःखकारणं द्वेषादि कथं सर्वनियामको हरिरुत्पादयेत् । इति तस्मात्कथमत्र

क्रुद्धवाक्यदृष्टान्तत्वेन योज्यत इति नैष दोषः । अत्र तु सर्वेषामप्येवंविधवाक्यानां सामान्यन्यायप्रकटनार्थत्वाद्बह्वर्थसम्भवाच्च सर्वलोको विद्वेषात्प्रसादं नाप्नोति किन्तु भक्त्यैवेत्याह ॥ **न चेति ।** स्वद्वेषिणश्च सृजतः स्वभक्तांश्च संहरतो लोकविलक्षणस्य विष्णोर्लोकदृष्टान्तः कथमित्याशङ्कां बृहत्संहितावचनेन परिहरति ॥ **ये पृथगिति ।** पृथग्विहिताः सर्वस्रष्टृत्वसंहर्तृत्वादयः । य आत्माऽपहतपाप्मा विजर इत्यादिवेदैर्विहिता लोकविलक्षणा दोषाभावाः । सिद्धान्तो हि तदीरितः । सदागमानां विशिष्टसिद्धान्तः समुद्बृह्योदितो हि । अत एव बृहत्संहितासिद्धान्तपञ्चरात्राख्या । **नन्वङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् । मन्त्रादिवद्वाऽविरोध** इत्यत्र ह्यङ्गदेवतोपास्तिरुच्यते । उपास्तिरपि भक्तियुक्तैव विवक्षिता । अतः किमर्थमत्र तद्भक्तभक्तिरुच्यते । नैष दोषः । अत्रापि भक्तियुक्तमेव दर्शनं नाम । न द्वेषयुक्तमिति भक्तौ प्रसक्तायां भक्तिरपि तद्भक्तभक्तियुक्तैव स्यादिति प्रसङ्गप्राप्तत्वात् । विपरीतो विपर्यये । प्रधानद्वेषित्वे तद्भक्तेष्वपि द्वेषी दृश्यते । लोके राजादीनामपि महिषीमन्त्रिभटादिषु तारतम्येन वर्तमानायाः स्वप्रीतेरनुसृतौ स्वसेवकेऽप्यद्धैव प्रीतिर्दृश्यते । साधनं मोक्षस्येति शेषः । तत्र मानमाह ॥ **लक्ष्मीति ।** अतितात्पर्यात्सिंहावलोकनन्यायेन हरिद्वेषस्याशुभदत्वे युक्तिमाह ॥ **हरिद्वेष इति ।** ब्रह्मादिषु तारतम्यक्रमाद्भक्तिर्हरिप्रीतिकारणं तत्प्रियोपयोगभक्तित्वात् । यथाऽस्मिन्हरौ । आदिशब्दाद्विहितभक्तित्वादिति द्रष्टव्यम् । सा भक्तिरिति यस्मादित्यन्वयः । प्राधान्यतारतम्यानुसारिभक्तित्वादित्यर्थः ॥ ५—६ ॥ **स्वामिनः फलश्रुतेरित्यात्रेय** इत्यादेरर्थमाह ॥ **ज्ञानेति ।** एषु ब्रह्मादिष्वन्यगतज्ञानकर्मभक्तिफलं च तारतम्यक्रमेणानुवर्तते । स्यात्किम् । तत्तत्स्वातन्त्र्यानुकूल्येन तत्तत्फलाधिक्यं चेत्तेषामशुभेऽपि स्वातन्त्र्यादशुभफलमपि स्यादित्यत आह ॥ **अशुभमिति ।** यदु किञ्चेमाः प्रजाः शोचन्त्येवमेवासां तद्गतिपुण्यमेवामुं गच्छति । न ह वै देवान्पापं गच्छतीति श्रुतिः । उक्तार्थे स्मृतिमानं चाह ॥ **द्रव्येति ।** देवानामेव शरीरादिद्रव्यं तैरभिमन्यमानपृथिव्याद्यात्मकत्वाद्विज्ञानप्रयत्नौ तेषामेव । तैरभिमन्यमानेभ्य इन्द्रियेभ्य उत्पन्नत्वात् । द्रव्यादीनां सर्वेषां स्वातन्त्र्यमपि तेषामेव । तत्तत्काले नियामकत्वात् ।

तेषां लोकप्रतिमाप्रतिष्ठादावपि द्रव्यस्वामित्वादिगुणैरन्येभ्यः फलाधिक्यं दृश्यते हि । एवं ब्रह्मादिवत्प्रेरकत्वात् । उभयत्रापि मानमाह ॥ **शुभाशुभेति** । सुरासुराणामन्यगतशुभाशुभफलभाक्त्वे कर्तुः किमपि नास्ति किमित्याशङ्क्यां प्रमाणवाक्येन परिहरति ॥ **यदीति** । मानुषोत्तममारभ्य मनुष्यगन्धर्वा देवगन्धर्वा देवामनुष्याः पारिशेष्यान्मुक्तिमन्धन्तमसं च विनोक्तस्थानेषु सुखदुःखभोगिनो विशेषात्प्रजाभ्य इति शेषः । तत्र मानमाह ॥ **मुक्ताविति** । क्रमात्तस्माद्यथोत्तरम् । देवावममारभ्य यथा गुणोत्तमत्वं तथा क्रमाच्छुभाधिक्यम् । युक्तमित्यादेरयमर्थः । ज्ञानप्रतिगृहीतुः शिष्या ज्ञानदातुराचार्यस्य शोभनाधिक्यं युक्तं च । न हि गोदाता गोप्रतिगृहीतृवदेकगोफलं क्षीराद्युपभोगमेवाप्नुयात् । किन्तु चिरतरकालं स्वर्गमाप्नुयाद्धि । तम इत्यादौ व्याख्यातृमन्त्रश्रोतॄणां महत्तारतम्यमवगम्यते ॥ ७ ॥ न हि बहुज्ञानफलार्थमविचारेण बहुभ्य उपदेष्टव्यमित्याशङ्क्यां परिहरन् **अनाविष्कुर्वन्नन्वयादिति** सूत्रं व्याख्याति ॥ **एवमपीति** ॥ ९ ॥ **ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादिति** सूत्रं व्याख्याति ॥ **एवमेवेति** । यथा श्रवणमननचिरभक्त्युपास्तयः क्रमेणोत्तरोत्तरं पूर्वपूर्वसाध्यादृष्टफलरूपा एवमेवोपास्तिसाध्यं ज्ञानमपि दृष्टफलं न तु स्वर्गादिवद्देहान्तरोपलभ्यमिति नियमः । प्रारब्धस्यैव कर्मणो विरोधाभावेन तद्विरोधे जन्मान्तरे जायते । ॥ १० ॥ **एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेरिति** सूत्रं व्याचष्टे ॥ **मुक्तिश्चेति** । चशब्देन पूर्वोक्तमित्थंभावं प्रारब्धकर्मविरोधाभावाख्यमत्राप्यनुकर्षति ॥ ११ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ३—४ ॥ * ॥ * ॥ समाप्तोऽयमध्यायः ॥ ३ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ वृत्तानुवादपूर्वकमधिकरणसङ्गतिं दर्शयति ॥ **समन्वयेति** । वस्तुनि प्रतिपाद्यपदार्थे साधने साधनाध्याये कथं फलाध्याये साधनं प्रतिपाद्यत इत्याशङ्का भगवतैव निरस्ता । प्रायिकत्वाच्चाध्यायानां पादानां च न विरोध इति । अत्यन्तावश्यंभावि महापद्यव्यवश्यत्वेन भावनीयम् । तद्विना मोक्षमात्रस्यालभ्यत्वात् । **आवृत्तिरसकृदुपदेशादिति** सूत्रं व्याख्याति ॥ **कर्तव्येति** । स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति नवकृत्वोपदेशः । **लिङ्गाच्चेति** सूत्रमनूद्य सत्तत्त्ववचनेन व्याख्याति ॥ **लिङ्गादिति** । लातव्यत्रऋजोर्ब्रह्मभावात्पूर्वमेव कियत्पूर्वब्रह्मणां शतात्सार्धं परार्धब्रह्मशतायुर्दीर्घकालं स्वस्मादर्धसहितं पञ्चसप्तति ब्रह्मवत्सरानित्यर्थः । तत्रिभागं ततस्तृतीयांशं पञ्चविंशतिब्रह्मवत्सरानिति भावः ॥ १ ॥ **आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति** सूत्रं व्याख्याति ॥ **आत्मेतीति** । तत्र मानमाह ॥ **आत्मा ब्रह्मेति** । तारः संसारतारकः शुद्धो वा । स्वराट् स्वतन्त्रः । यच्चाप्नोति यदादत्ते यच्चात्ति विषायानपि । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यत इति वचनान्नियताश्रयत्वेन नित्यत्वमादत्त इति ह्यात्मा । तथा च भागवते । हरिर्हि साक्षाद्भगवान् शरीरिणामात्मा ऋषीणामिव तोयमीप्सितः । हित्वा महान्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दम्पतीनामिति । नियताश्रयत्वविवक्षायामृषितोय दृष्टान्त उच्यते । अन्यथा प्रत्यक्षविरोधात् ॥ २ ॥ नाम ब्रह्मेत्युपास्त इत्यादौ सामानाधिकरण्योक्तिभ्रमेण प्राप्तामन्यथोपास्तिं निराकुर्वन् **न प्रतीके न हि सः** इति सूत्रं व्याख्याति ॥ **प्रतीकेति** । तत्र मानमाह ॥ **योऽन्यथेति** । न हि स इति हि विपक्षबाधकप्रमाणं प्राबल्यं द्योतयतीत्याकूतम् ॥ ३ ॥ **ब्रह्मदृष्टिरुत्कर्षादिति** सूत्रं व्याख्याति ॥ **ब्रह्मेतीति** । तत्र मानमाह ॥ **आधीति** । जीवः स्वयं ब्रह्मेत्युपासते उपदिशन्ति च विद्वांस इति परयोजनां दूषयति ॥ **नात्मेतीति** । **द्युभ्वाद्यायतनं स्वशब्दात्** । **प्राणभृच्चेति** निवारयन्नुक्तार्थे मानमाह ॥ **आत्मशब्दामिति** । आत्मब्रह्मेति युक्तितः स्वशब्दादिति हेतुप्रयोगरूपेण **भेदव्यपदेशाच्च** । **भेदव्यप-**

**देशाच्चान्यः । भेदव्यपदेशात् । स्थित्यदनाभ्यां चेति** भेददार्ढ्ये मानमाह । पुनः पुनस्तात्पर्यात् । नन्वत्र प्रतिषिध्यमानो भेदः केवलं व्यवहारमात्रनिवर्तको न परमार्थः । अस्यारोपितत्वादित्यत आह ॥ **व्यावहारिकतेति ।** आरोपस्यानारोपितदर्शनपूर्वकत्वनियमात् । भेदारोपार्थं कुत्रचित्परमार्थभेदेन भवितव्यमिति भावः । व्यावहारिकं भेदपञ्चकमिति शेषः । वचनं वचनाभिधेयम् । यदि स्याद्यावहारिकमिति स्वपदमेव व्याख्याति ॥ **तस्यापीति ।** तस्य भेदबाध्यत्वस्य बाध्यता स्याच्चेद्भेदः पारमार्थिकः स्यात् । भेदबाध्यत्वस्याबाध्यत्वं चेत्तेन ब्रह्मणो भेदस्याङ्गीकार्यत्वादयं भेदः सत्यतां गतः । ननु भेदबाध्यत्वस्याभावापरपर्यायस्याङ्गीकारेऽपि नाद्वैतहानिः । भावाद्वैतं ह्यभ्युपगम्यत इति । मैवम् । अभावाद्ब्रह्म भिन्नं चेद्भेदसत्यता स्यात् । अभिन्नं चेदभाव एव वा ब्रह्मैव वा स्यात् । एकतत्त्वस्य निर्विशेषत्वाङ्गीकारात् । अभावमात्रत्वेऽपसिद्धान्तः । ब्रह्ममात्रत्वे तु भेदाभावो नास्तीत्युक्तं स्यात् । तथा च भेदसत्यता स्यात् । भेदभेदाभावयोरेकतरनिषेधोऽन्यतरविधिपर्यवसायीति सोदाहरणं प्रतिपादयति ॥ **एकस्येति ।** ननु स्वप्नेऽध्यस्तस्य रजतस्य च रजतत्वं मिथ्या हि । पुनर्बाधप्रतीतरजतत्वस्य शुक्तित्वमपि मिथ्यैव । एवमेवात्रापि परस्परविरुद्धयोर्द्वयोर्मिथ्यात्वं स्यादित्यत आह ॥ **न स्वप्न इति ।** यद्यपि नेदं रजतं शुक्तिरेवेति प्रतीतं शुक्तित्वं नास्ति । तथाऽप्यरजतत्वस्यैव । प्रबोधे सति रजतत्वस्यानुपलभ्यमानत्वात् । न ह्यरजतत्वं नाम शुक्तित्वमेवेति नियमः । वासनायाश्चारजतत्वसम्भवात् । भेदो मिथ्येति स्ववाचः ॥२॥ उत्तरसूत्रं पुनरपि तात्पर्याद्विस्तरतो विवृणोति ॥ **प्रतीकेति ।** तस्मादन्यथोपास्तेरनर्थहेतुत्वात् ॥३॥ स्यादेतत् । प्रतीके इदमात्मेत्युपासना कार्या । न हि स आत्माऽहंग्रहेणोपास्यः । प्रतीकं प्रतीके तु ब्रह्मदृष्टिः कर्तव्या । ब्रह्मत्वस्योत्कर्षरूपत्वात् । तथोपास्तौ प्रतीकस्य तुष्टिसम्भवात् । ततोऽभीष्टसौलभ्यादित्येवानयोर्योजनेत्यत आह ॥ **नात्मेत्युपासनेति ।** इत्युक्तविरुद्धता तस्मात्स्वस्यैवोक्तयुक्तिविरुद्धता । अचेतननामादिप्रतीकादिति शेषः । स्यात्किम् । नात्र प्रतीकस्य ब्रह्मताध्यानेन ब्रह्मणो नीचध्यानं किन्तु प्रतीकस्योच्चत्वमेवेत्यत

आह ॥ **चण्डाल इति** । आत्मानमित्यादेरयमर्थः । अयं चण्डालो ननु नृप इति वदताऽऽत्मानं विषयीकृत्यैव चण्डाल इति प्रोक्तमित्यभिप्रायसहितवदेव कुप्यति । ध्यात इत्यादेरयमर्थः । ब्रह्मप्रतीकयोरैक्यस्य ब्रह्मभावे ध्याते सति तदैव ब्रह्मणः प्रतीकभावो ध्यातो न स्यात्किम् । यथा चण्डालस्य राजत्वभावनायां राज्ञा न ज्ञातायां राजकोपो न स्यादेवं प्रतीकस्य ब्रह्मभावनायां च ब्रह्माविज्ञानतायां न ब्रह्मकोप इत्यत आह ॥ **न चैवेति** ॥ ४ ॥ **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति** सूत्रं व्याख्याति ॥ **तथेति** । **इतरस्याप्येवमसंश्लेषः पाते त्विति** सूत्रं व्याख्याति ॥ **तद्विष इति** । भगवद्द्वेषोऽपि द्वेपपरिपाके सति पूर्वस्य पुण्यस्य नाश उत्तरस्यासङ्गता च स्यात् । स्यान्मतम् । यदेव विद्ययेति हीति ज्ञानिकर्मणोऽन्यकर्मण आधिक्यं ह्युच्यते । शेषत्वादित्यादावपि तदेव । तस्मात्कथं पुनरुक्तिर्न स्यादित्यत आह ॥ **यदेवेति** । पश्चान्मोक्षे वीर्यप्रदं त्विति मोक्षे आनन्दोद्रेकलब्ध्यर्थं कर्मणो वीर्यप्रदं ज्ञानमिति पश्चादत्रोदितम् । **भोगेन त्वितरे क्षपयित्वाथ सम्पत्स्यत** इति सूत्रं व्याचष्टे ॥ **तत इति** । प्रारब्धं पुण्यपापं च क्षपयित्वा ब्रह्मविदुत्तमः । प्राप्नोति ब्रह्मदर्शी मोक्षं प्राप्नोति । कियता कालेन प्रारब्धकर्मक्षय इत्याशङ्कां प्रमाणवाक्येन परिहरति ॥ **ब्रह्मणामिति** । आरब्धकर्मक्षयस्तूच्चावचानां सर्वेषामपि ब्रह्मणां शतकालात्पूर्वं स्यादेव । कर्मणस्तावत्काले वर्तित्वं ब्रह्मण एव ॥ ८ ॥ * *

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥ ४—१ ॥ * ॥ * ॥

॥ श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ एवं तावद्वैराग्यादिभिरुत्पन्नेन ब्रह्मदर्शनेन कर्मक्षयमात्रम् । एतदध्यायपादानां सङ्गतिं दर्शयति ॥ **कर्मेति** । कथं देवानामुत्क्रान्तिमार्गौ न स्यातामित्यत आह ॥ **स्रष्टृष्विति** । अन्येषां व्यासदर्शिनामृषिशतादीनामुत्क्रमणकाल एव मोक्षो न विद्यते ।

प्राप्यापाल्यपिशब्दाच्चतुर्मुखं प्राप्यापि तेनैव सहेति गम्यते। साक्षान्मुक्तिरिति वचनात्। जीवन्मुक्तेषु भगवल्लोकमात्रं प्राप्तेष्वपि मुक्तिशब्दव्यवहारोऽस्तीत्याकूतम्। अत्र भागवतवचनं स्मृत्यन्तरं श्रुतिं च मानमाह॥ **क्ष्मेति**। यदा ब्रह्मा सर्वसंहारेच्छुः पृथिव्यादिदेवताभिः। मनोदेवताभ्यामिन्द्रकामाभ्याम्। इन्द्रियदेवताभिश्चन्द्रादिभिस्तद्विषयदेवताभिर्बृहस्पत्यादिभिश्च। अहङ्कारदेवतया वीन्द्रेण शेषेण च परिवृतः परिवारभूतैः प्रवेशार्थं विम्बत्वेन वृतो निर्विकारं ब्रह्म विष्ण्वाख्यं विशति। तदा ते योगिनोऽपि तेन ब्रह्मणा साकमेवाभिमानसहिता एव न तु पराभेदेन गताभिमानाः। के योगिनः के भगवन्तमनुप्रविष्टा भगवल्लोकमुख्यं ह्युपयान्ति पृथक् पृथक् स्वरूपमनुप्रविष्टाः प्रजापतौ ब्रह्मचर्यमुपवसेतित्वल्लक्षणासम्भवात्॥ **वाङ्मनसि दर्शनाच्छब्दाच्चेति**। सूत्राभिप्रायमाह॥ **तत्र प्रवेश इति**। तत्र तेषां मुक्तिं प्राप्तवतां मध्ये। तत्र तस्यामवस्थायाम्। एवंविधे मोक्षे विवक्षिते सतीत्यर्थः। ननु युक्त्यागमाभ्यां तत्त्वतो विचार्यमाणे सति मोक्षस्यैकप्रकारस्यैव सम्भवात्कुतो नानाप्रकारेण वदन्तीत्यत आह॥ **पुंसामिति**। तत्तन्माहात्म्ययोगतो ब्रह्मादिमुक्तानां स्वस्वमहत्त्वतारतम्यानुकूल्येन ज्ञानस्य महत्त्वम्। बहुला विश्वदेशव्यापिनी। अतिविशदाऽन्यथाज्ञानलवेनाप्यमिश्रिता। स्पष्टा बहुविशेषविषया। निरन्तरा विश्वविच्छेदरहिता। विश्वकालव्यापिनीति भावः। निर्लेपा विवशसङ्गरहिता। वीतदोषाऽन्यथाज्ञानमिश्रत्वादिदोषरहिता। विशेषान्नित्याविकारित्वादीन्। ब्रह्ममतेरपि श्रीमतिवत्स्पष्टत्वाभावं तत्तन्त्रत्वादिकं च वैलक्षण्यमभिप्रेत्य प्रायःशब्दः प्रयुक्तः। तदन्येषां समुद्रतरलोपमा ब्रह्मणोऽन्येषां मुक्तानां मतिस्तु समुद्रतरङ्गवत्सङ्कोचविकासवती। वृद्धिह्रासापेक्षयाऽग्निज्वालादृष्टान्तः। यथा खद्योतप्रद्योतनेनात्यल्पेन शाखारूढपक्षिपतत्रे पत्रभ्रमो जायते। एवमेतादृशाऽप्यन्यथैवार्थो ज्ञायते। तदाह॥ **खद्योतेति**। विमता गतिर्दुःखेता पुद्गलावच्छिन्नचिरतरगतित्वात् रणभीतगतिवत्। कथं गतित्वादिहेतुं प्रयुक्तवतोऽयमभिप्रायः स्यादिति न शङ्कनीयम्। नित्यमूर्ध्वं व्रजत्येव पुद्गल इत्युक्तगतेरेवात्र विवक्षितत्वात्। अनूर्ध्वेत्यादेरयमर्थः। अनूर्ध्वगतित्वं दुःखेतरत्वप्रयोजकं न गतित्वमात्रम्। तस्मादने-

नोपाधिना प्रयोजकोऽयं हेतुरित्युच्यते तर्हि तत्र ब्रूमः । साधनव्यापकः साध्यसमव्याप्तिर्ह्युपाधिर्नाम । अयं च साध्यव्याप्तिमात्र भवति । या दुःखेता साऽनूर्ध्वगतिरिति व्याप्त्यभावात् । दृष्टा हि दुःखितैव स्वर्गस्य दूरोर्ध्वगतिः । अपि च वेदविरुद्धस्यान्यमोक्षस्य साधकत्वेनानुमानं ह्युत्प्रेक्षते । तत्प्रतिसाधनरूपस्यास्मदनुमानस्योपाधिर्दूषणं न भवति । उपाधेः प्रत्यनुमानसूचनात्मकत्वात् । अत्राविनाभावबलेनोपाधिनिवृत्त्या पक्षात्साध्यनिवृत्तिर्विवक्षिता । विमता गतिर्दुःखेता न भवति । अनूर्ध्वगतित्वरहितत्वाद्वैधुर्येण रणभीतगतिवदिति प्रत्यनुमानं ह्यत्र विवक्षितं स्यादित्याकूतम् । प्रत्यनुमानस्य प्रत्यनुमानं केनापि नाङ्गीकृतं हि । अभ्युपगम्याह ॥ **अथाऽपीति** । हस्तपादवत्पुद्गलत्वादिना सशरीरत्वं नाम जडशरीरत्वमभिप्रेतं हि । तस्माद्यत्र मोक्षे विवक्षितगतित्वमस्ति तत्र देहवत्त्वमप्यस्तीति न्यायाङ्गीकारे मुक्तानां शक्त्यादिकमङ्गीकुर्वतोऽपसिद्धान्तः स्यादित्यत आह ॥ **आगमेति** । प्रसङ्गतोऽतिप्रसङ्गतः । कथमतिप्रसङ्गः स्यादित्यत आह ॥ **नेति** । या गतिः सर्वलोकानां का गतिरिति । साधनानुग आगमानुसारित्व इत्युक्तन्यायोऽत्राप्यनुसर्तव्यः । मोक्ष एवमस्माभिः प्रतिपाद्यमानप्रकारेण भवेत् । यद्यपि सर्ववित्त्वादज्ञानादिरहितः सर्वेशत्वान्निरनिष्टत्वेन निरवद्यत्वेन विप्रलम्भरहितो विष्णुः स्वयं सौगतमतं चकार । तथाऽपि न ग्राह्यम् । कुतः । असुराणां मोहायैव चकारेति यदतोऽसुराधिकारत्वात् । तर्हि विष्णोरपि क्वचिद्विप्रलम्भकत्वादाप्तत्वं नास्तीति च न वाच्यम् । गुह्यभङ्ग्या प्रणीतानां तेषामेव सूत्राणां भगवता व्याख्यातानां देवजनस्य सज्ज्ञानजनकत्वात् । अन्यत्र श्रोतृदोषादेव भ्रान्तिकरत्वात् । एकलमद्वैतमनुमेयबहिस्तत्त्वम् । अनेन प्रत्यक्षेण प्रतिबिम्बेनानुमेयमेव बाह्यं वस्तु प्रत्यक्षगं प्रत्यक्षं बाह्यं च स्यादेव । जगत्क्षाणिकमिति प्रतिपाद्यमानानां चतुर्विधत्वाच्चतुर्विधमुक्तं मायिसाम्यं दर्शयितुं माध्यमिकमतमनुवदति ॥ **न किञ्चिदिति** । न हि मायिनां पक्षेऽप्यहंप्रत्ययवेद्य आत्माऽस्ति । अहंप्रत्ययवेद्यस्याहङ्कारत्वेन हेयत्वाभ्युपगमात् । न विशेषोऽपि कश्चन चेतनत्वजडत्वसप्रतियोगिकत्वादिकोऽन्यो विशेषोऽपि कश्चन न विद्यते । निर्लेपं निःसङ्गम् । एवंविधं शून्यं भावनया स्वरूपीभूतं मोक्ष इत्यसद्भिरुच्यते ।

शून्यैकरसताज्ञानात् । आत्मनः शून्यमात्रसारत्वानुभवात् । मायिसाम्यमुपपादयति ॥ **एवमिति** । एकस्यैव जीवत्वं वदन्तीत्येकजीवत्ववादिनः । बहवो जीवा इति मतमेषामिति बहुजीवमताः । निर्विशेषत्वेत्यादेरयमर्थः । उभयोरपि सर्वविशेषराहित्यवचनेनैव शून्यं ब्रह्मेत्यनयोर्भेदो नास्तीत्यायातम् । सच्चित्सुखाद्यात्मकं हि ब्रह्म माय्यङ्गीकरोति । तस्मात्कथं शून्यसाम्यमित्यत आह ॥ **सदिति** । अखण्डं तत्त्वमिति वादिनो ब्रह्मणः सच्चित्सुखात्मादिकं ब्रह्मणो विशेषं किमाहो स्वरूपमात्रम् । मनोवाचामगोचरस्य तस्य सच्चित्सुखादिकं कुतश्च प्रमाणादवगम्यते । सत्त्वादिकं ब्रह्मणो विशेषणं तथाऽप्यनृतादीनां व्यावर्त्यानां भेदात्तत्र सत्त्वादिपदानि लक्षणया वर्तन्ते परमित्यत आह ॥ **व्यावर्त्येति** । तदेवोपपादयति ॥ **अनृतेति** । अपोहं शून्यादिति शेषः । अपि च सर्वविशेषरहितत्वाद्ब्रह्मणः शून्यादपि कश्चिद्विशेषो नास्ति । मिथो विशेषस्यापि सर्वविशेषान्तःपातित्वात् । कथं वैदिकस्य मायिनो वेदबाह्येन साम्यमित्यत आह ॥ **प्रामाण्यादिति** । आदिशब्दादपौरुषेयत्वात्स्मृतिप्रामाण्यम् । स्यादेतत् । देशकालानन्तरादिभिः सह बाध्यमानाद्वेदवाक्यादेरतत्त्वावेदकप्रमाणादापततो बाध्यानां रज्जुसर्पविज्ञानादीनामप्रमाणानामस्ति हि वैलक्षण्यमित्यत आह ॥ **दीर्घेति** । दीर्घकालमनिवर्तमानस्य प्रमाणत्वाङ्गीकारेऽतिप्रसङ्गं चाह ॥ **तलेति** । आदिशब्दाद्व्यतिविप्रकृष्टत्वज्ञानं सजातीयविजातीयस्वगतभेदरहितत्वं ब्रह्मणोऽङ्गीक्रियते हि मायिना । तन्माध्यमिकेनाप्यङ्गीक्रियत इत्याह ॥ **निर्भेदत्वमिति** । कथं सदद्वैतवादिनो माध्यमिकस्य च साम्यमित्यत आह ॥ **न हि सदिति** । न हि तेन शून्यत्वं नाम कस्यचित्सत्पदार्थस्याभाव इत्यङ्गीक्रियते सविशेषत्वभयात् । अयमपि ब्रह्मणो देशकालसम्बद्धां सत्तां नाङ्गीकरोत्येव । ज्ञानं जाड्यविरोधि च । मायिपक्षे शून्यपक्षेऽपि ज्ञानं जाड्यविरोधिमात्रं न भावरूपम् । तेऽपि अभावरूपा अपि कस्मात्सूत्रकारभट्टारकेणैतत्पक्षमोक्षो न निराकृत इत्यत आह ॥ **एतादृशानामिति** । स्वपक्षे मोक्षस्य दृढसाधनेन तद्विरुद्धानां निराकरणं कृतं स्यादेव । **नाभाव उपलब्धेरित्युक्तितश्च** तन्मोक्ष विस्तरतो निराकरोति ॥ **आत्मेति** । सुखं मे स्यादितीष्टस्यात्माऽवधिः । यस्यात्मनो

विनाशेन शून्यभावो मोक्षो नात्मावधिस्तर्हि कस्यचिद्घटस्य नाशेन शून्यतामोक्षः स्यात् । मायिनोऽपि ब्रह्मणः सत्त्वादिविशेषाणां कल्पितत्वाद्घटाभावाद्ब्रह्मभावस्य मोक्षस्य निर्विशेषत्वाद्घटनाशमात्रेणैव मुक्तत्वं समं हि । कथं घटाभावस्य निर्विशेषमोक्षत्वं घटते । घटप्रतियोगिकत्वादिविशेषवत्त्वादित्यत आह ॥ **दृश्यमान इति** । आत्माभावस्यात्मप्रतियोगिकत्वादिविशेषे दृश्यमानेऽपि यद्यविशेषताऽस्तीत्युच्यते तर्हि घटाभाव एवाविशेषः स्यादित्युत्तरम् । अनुभवविरोधस्य समत्वात् । यदि चेदिति पक्षान्तरानुवादनिपातेनापि विवक्षितार्थमेव विशिनष्टि । आहोस्विदितिवत् । ननु न हि वयमात्मनाशमात्रं मोक्षं ब्रमः । साम्प्रतं प्रपञ्चबाधसहितः पाश्चात्यात्माभावोऽहि मोक्षः । स एव निर्विशेषश्चेति चेत् । अनागतः पाश्चात्यघटाभाव एव मोक्षः स्यात् । स एव निर्विशेषश्चेत्युत्तरम् । वेदाप्रामाण्यवादिना केनानुमानमात्रेण ह्येवंविधो मोक्षो विधीयते । तत्र चैवं प्रत्यनुमा सम्भवति । विमतो मोक्षो न सम्भवति । अदेहत्वाद्घटाभाववदिति । तदाह ॥ **न मोक्ष इति** । नन्वशरीरो वाव भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इत्यागमविरुद्धत्वात्कालात्ययापदिष्टोऽयं हेतुरिति वदन्तं मायिनं प्रत्याह ॥ **न चेति** । अतत्त्वावेदकत्ववचनमप्रामाण्यवचनमेवेति पूर्वोक्तवर्त्मना मोक्षादिवाक्यं न तत्त्वावेदकमेवास्माभिरङ्गीक्रियत इति यावन्मनोवाग्भ्यामनुसन्धीयते तावदनिर्वाच्यमित्यभ्युपगमात् । तथाऽप्यदेहत्ववाक्यविरोधः परिहर्तव्यो हीत्यत आह ॥ **न चादेहत्वेति** । यद्दुःखमित्यादेरयमर्थः । विमतो मोक्षो न भवति दुःखत्वाद्यथा क्षतक्षारजदुःखमित्यत्र किं दूषणम् । न चाद्वैतवादिनोर्हेतुरासिद्ध इति वक्तुं शक्यते । निर्विशेषमोक्षस्य दुःखत्वात् । भेदाङ्गीकारे द्वैतभङ्गप्रसङ्गात् । विज्ञानवादोऽप्येवं हेयः । उक्तदोषो घटनाशस्य मोक्षादिः । नैतादृङ्मोक्षरूपता तादृशो निर्विशेषज्ञानभावस्य मोक्षरूपता न सम्भवति । मुक्त्यवस्था न केवलज्ञानिनी । अवस्थात्वात् इदानींतनावस्थावत् । कालो नाम पदार्थो नास्तीति कालस्य सामान्यानिषेधे क्रियमाणे सति पूर्वं कालोऽभूदिदानीमप्यस्ति पश्चादपि भविष्यतीति कालगोऽनुभवस्तन्निरोधं निरुणद्धि च । स्वव्याहतं चेदं कदाचिदपि कालो नास्तीति वचनम् । कालाभावाधिकरणत्वेन कदाचिदिति कालत्रयस्याप्य-

भ्युपगतत्वात् । समश्चायं कालानभ्युपगमदोषोमायिमाध्यमिकयोगाचार्याणाम् । यद्यपि बहुजीववादिपक्षे एकमुक्तौ सर्वनिवृत्त्यभावात्कथञ्चित्तद्विरोधो नास्तीत्यभ्युपगम्यते । तथाऽप्येकजीवत्वपक्षे त्वेकमुक्तावेव सर्वनिवृत्त्यभ्युपगमादियं कालप्रमा तद्विरोधिनी भेदमुपपादयदेव । एकजीववादो मानेनापि विरुद्ध इत्याह ॥ **विमत इति** । कालाद्वैतवादिनो दैवज्ञापसदाः शब्दाद्वैतवादिनो वैयाकरणापसदा ईश्वराद्वैतवादिन :पाशुपतैकदेशिनस्तन्मतानि चानेनैव न्यायेन निराकृतानीत्याह ॥ **कालेति** । समत्वात्पक्षदोषयोर्विवर्तपक्षत्वेनाद्वैतस्य निर्विशेषत्वेन च पक्षस्य समत्वादत एवात्रोपन्यस्तस्य दोषस्यापि समत्वात् । ज्ञानमित्यादेरयमर्थः । वैभाषिकसौत्रान्तिकाभ्यां निर्विशेषविषयज्ञानं मोक्षेऽपि क्षणिकमिष्यते । तत्सन्तानमात्रं नित्यम् । उक्तानुमा कालत्वहेतुना प्रवृत्ता । मोक्षकालः सविशेषज्ञानवान्कालत्वात्संसारकालवदिति । अनुमानान्तरेणापि दूषयति ॥ **मोक्ष इति** । अनुमातीत्यादेरयमर्थः । वादिभिः स्वमतसाधकत्वेन प्रयुक्तान्यनुमानानि सर्वाण्यप्येवमुक्तभङ्ग्या प्रतिसाधनोपपत्तेरेव निषिद्धानि । तर्हि युष्मत्पक्षसाधकानुमानानां प्रतिसाधनानि सम्भवेयुरित्यत आह ॥ **श्रुतय इति** । अस्मद्वचनेषु प्रमाणत्वेन श्रुतयो वर्तन्ते । चशब्दाच्छ्रुत्यनुगृहीता अनुमाश्च । नैयायिकाद्या इत्याद्यशब्दाद्वैशेषिकाद्याः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मगुणानामत्यन्तोच्छित्तिर्मोक्ष इति वदन्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इत्यस्याः श्रुतेः का गतिरित्यत आह ॥ **प्राकृतेति** । अप्रियं नामात्मनः प्रतिकूलं हि । तत्सामस्त्येनोक्तम् । बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोरिति श्रुतिवाक्यम् । नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा । नैवमसुरा एवमनेवं च मनुष्या इति श्रुतिः । परमात्मा विशिष्टचेतनो मुक्तियोग्य इत्याकूतम् । एकवचनं तु समुदायापेक्षया युज्यते । न प्रेत्य संज्ञाऽस्तीति वाक्यविरोधात्कथं मुक्तस्य ज्ञानं स्यादित्यत आह ॥ **ज्ञानेति** अस्य मुक्तस्य मुक्तसंज्ञानविषयता नास्तीति संज्ञा नास्तीति वाक्यस्यार्थः । उक्तार्थमेवोपपादयति ॥ **आशंक्येति** । न प्रेत्य

संज्ञाऽस्तीत्यात्मनोक्ते सति मुक्तस्य ज्ञानहानिर्मुक्तामाशङ्क्यात्रैव मा भगवान्मोहान्तमापीपन्न प्रेत्य संज्ञाऽस्तीत्युक्तवत्या मैत्रेय्याः प्रबोधनार्थं याज्ञवल्क्येन वा अरे अहं मोहं ब्रवीमि । अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा इति स्वरूपनाशमूचिवान् । धर्मानप्यनुच्छिन्नान्याह । मोहान्तमापीपत् मोहपरिपाकं प्रापयत् । न वा अरे अहं मोहं ब्रवीमि । हे मैत्रेयि अहं मोहकारणं न ब्रवीमि वै । ज्ञानरूपस्य ज्ञाननाशो नाम स्वरूपनाश एवेति यत्तस्मान्मैत्रेय्याः स्वरूपनाशाशङ्काऽऽसीत् । अतः सा परिहृता । तेनैव शून्यमतनिराकरणमप्यासीत् । मात्रासंसर्गस्त्वस्य भवतीति माध्यंदिनश्रुतिः । विषयभोगमाहात्म्यस्य मुक्तस्य । स च बुद्ध्यादिभाव एव घटते । ननु यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं जिघ्रेदित्यादिवाक्ये मोक्षे विषयाक्षेपः क्रियते इत्यत आह ॥ **आचिक्षेपेति** । अनिष्टत्वहृदा मुमुक्षोरनभीष्टत्वाभिप्रायेण विद्यमानस्य सर्वस्य निर्विशेषमात्रात्मकत्वेन च चक्षुराद्यभावाद्दर्शनप्राणादिभोगरहितमोक्षाक्षेपरूपोऽयं व्यपदेश इति भावः । येनेत्यादेरयमर्थः । विज्ञातारमरे केन विजानीयादित्यत्र सर्वज्ञापकत्वेन विज्ञातृशब्दोक्तं विष्णुमात्मानं वा । बुद्ध्याद्यभावपक्षे केन विजानीयादिति पक्षाक्षेपेणोच्यमानं परमात्मन आत्मनश्च ज्ञानं सर्वथाऽनिष्टं हि । तदेवोपपादयति ॥ **नाखिलेति** । प्रत्यक्षमिति क्रियाविशेषणम् । साक्षिप्रत्यक्षतया वर्तमानमिदमात्मज्ञानमित्यर्थः । नन्वात्मन आत्मज्ञानं कर्तुः कर्मविरोधेन पराहतमित्यत आह ॥ **कर्त्रिति** । अहं मां जानामीति नित्यानुभवः । विरोधो दृष्टबाधनम् । प्रमाणोपलब्धस्यार्थस्य बाधनमेव हि विरोधो नाम । ननु यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यत्रेवशब्दात्तद्धतोऽद्वैतभावो हि मोक्ष इत्यत आह ॥ **अस्वातन्त्र्यादिति** । तथा सति यत्र त्वस्य सर्वमात्मैवाभूदित्यस्माद्द्वैतपक्षानुवादिवाक्याद्विशेषाभावेन पुनरुक्तिप्रसङ्गाद्भेदशब्दं प्रयुज्येवशब्दप्रयोगे तु भेदाभेदावुक्तौ स्यातामित्याशयः । न च वाच्यमिवशब्देन दर्शनाभावस्य विवक्षितत्वात् । तथा सति तदितर इतरं पश्यतीति वाक्यशेषे भेदोक्तिविरोधश्च । तस्माद्द्वैतमिवेत्युक्तं परमात्माधीनो भेद इत्यर्थः । अत्रैव मेति मैत्रेय्युक्तोत्तरमुच्छिन्नधर्मेति वाक्यं च कीदृशमित्यालोच्यताम् । दृष्टत्वादिधर्मानुच्छेदो हि

तत्राप्यभिप्रेयत इत्याशयः । सुखादीत्यादिशब्दाद्बुद्धिः । न हि बुद्धिरहितस्य दुःखादिनिवृत्त्या किञ्चित्प्रयोजनम् । आत्मसम्बन्धित्वेनाज्ञातत्वात् । तयोश्चेत्यादेरयमर्थः । तयोरर्थानर्थयोर्मध्ये दुःखहानात्सुखनाशोऽधिकगुरुर्भवेत् । तस्माद्बुधेर्थहानिभयाल्लब्ध्वर्थाय न यतेत । तदेवोपपादयति ॥ **प्राप्याऽपीति** । स्यात्किं सत्यमेवं वनिताभोगावल्पसुखाप्तये वित्तार्जनादिनिमित्तमहादुःखं प्राप्नुवन्ति प्राणिनः । तत्कर्मरागमूढत्वनिमित्तम् । न हि विवेकिनस्तथा कुर्वन्तीत्यत आह ॥ **न च रागेति** । विमतो दुःखयुक् चेतनत्वे सति सुखार्थित्वात्सम्मतवदिति च मुक्तानां सुखाभाववादिनं प्रत्यतिप्रसङ्गानुमा । स दुःखाद्विमुक्त आनन्दी भवतीति पैङ्गिश्रुतिः । निर्गुण इति भगवद्वचनम् । अनन्यहैतुकं साक्षाद्भगवद्भक्तिरूपम् । सुखमानन्द इत्युक्तो मुदो भोगनिमित्तकाः । प्रमोदस्तद्विशेषोत्थो मुक्तानामात्यल्पभोगत इति ऋग्वेदसंहितायाम् । किंबहुना सर्वकामस्य विषयाः पर्याप्ता इत्याह ॥ **कामस्येति** । सर्वेदं जगत्प्रमाणमादाय परस्तव युतोऽसौ भगवान्विष्णुः स हि मोक्षप्रदः सदा । इन्दुरिष्टप्रदानाद्यो वायुरादाय गच्छति । इन्द्रनाम्नः केशवस्य समीपं मुक्तिमञ्जसेति स्कान्दे । ननु शिरःकरादिरहितत्वान्मुक्तस्य कथं दर्शनादिभोगः स्यादित्यत आह ॥ **शिर इति** । तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परान्न यत्पदम् । व्यपेतसङ्क्लेशविमोहसाध्वसं सन्दृष्टवद्भिर्विबुधैरभिष्टुतो न वर्तत इत्यादि श्रीमद्भागवते । परं न यत्पदं यतो विशिष्टं स्थानं नास्ति । रजस्तमसो मिश्रितं सत्त्वं च नास्तीति विशेषशुद्धसत्त्वस्य विद्यमानत्वात् । कालविक्रमो जरामरणादिः । माया त्रिगुणाच्छादिका परमाच्छादिका च । अपरे प्राकृतदेहादयो व्याध्यादिहेतवः किमुत । सुरुचः सुकान्तयः । सुपेशसः सुपुष्टयः सुवर्चसः सुतेजसः । इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् । अशृण्वन्तः कर्णवन्तः सखाय इत्यादिश्रुतिः । नैकामुक्तिभाजः शिरःकराद्यैर्युक्ताश्चेतनत्वादिदानींतनात्मवत् । तदाह ॥ **शिर इति** । न चात्र संसारित्वादिकमुपाधिः । उक्तप्रमाणविरुद्धत्वेनाभासत्वात्तस्य । मुक्तिकालो विवक्षितकरादिमान्कालत्वादिदातींतनकालवदिति पूर्वशब्दादवगन्तव्यम् । सोऽश्नुते सर्वा-

न्कामान्सह ब्रह्मणा विपश्चिता । एतमानन्दमयमात्मानमुपसङ्क्रम्य । एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । एष आत्मेति होवाच । अमृतस्यैष सेतुः । उतामृतत्वस्येशानो यदन्नेनातिरोहति । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इत्यादीनि वाक्यानि । इत्यादिका अपीत्यादिशब्दान्मुक्त्यवस्था जीवस्य परेणैक्ययुक्ता न । अवस्थात्वात् । संसारावस्थावत् । न च साध्यविकलो दृष्टान्तः । इदानीं भेदस्य प्रत्यक्षेणानुभूयमानत्वात् । अबाध्यप्रत्यक्षस्याप्रमणात्वे वादिनोऽनुमानदूषणश्रवण एव प्रत्यक्षस्याप्रामाण्याद्दूषणं नोक्तमित्यायातम् । कथञ्चेत्यादेरयमर्थः । दुःखीति किञ्चिद्वस्त्वपि कुतो हेतोरपि न दृष्टमिति यस्मान्मुक्तौ जीवस्य ब्रह्मणो भेदाभेदपक्षं निराकरोति ॥ **न चैवेति** । उक्तार्थं निगमयति ॥ **इत्थमिति** । केवललौकिका मूढा अपि मम सदा सुखं स्यादिति यत्सुखं सामान्यतो जायते तद्रूपं समुद्दिश्य मोक्षमप्येते वादिनो भ्रमेण न विन्दन्ति यस्मात्तस्मादेतानि मतानि सर्वाण्यपीत्थमुक्तयुक्तिभिर्भ्रमजान्येव । सिंहावलोकनन्यायेन साधनाध्यायचतुर्थपादे विपक्षस्वपक्षयुक्तीर्दर्शयति ॥ **औदार्यमिति** । अनन्तरसमतीते पादे चोभययुक्तीर्दर्शयति ॥ **सुशक्यतेति** । अस्मिन्पादे चोभयीर्युक्तीर्दर्शयति ॥ **व्यामिश्रतेति** । प्रकृतं देवमोक्षं प्रपञ्चयति ॥ **प्रधानेति** । इह भूतेषु । **तच्छ्रुतेनैकस्मिन्दर्शयतो हि** लेकस्मिन्नधिकरणे । वायाविन्द्रः सोम आदित्यो बृहस्पतीन्द्रादीनां लयस्थानत्वेनोच्यते हि । कश्चिद्वायुर्भूतप्रकरणत्वात् भूतवायुरेवेति न मन्तव्यं किन्तु प्रधानवायुरेव । इन्द्रादिलयस्थानत्वान्यथाऽनुपपत्तियुक्त्या कथं प्रधानवायोर्भूताभिमानित्वम् । यावता तच्छब्देनोच्यत इत्यत आह ॥ **यस्मादिति** । सोऽपि श्रुतौ भूतमानिलिङ्गत्वेनोक्त इति यस्मात्तस्माद्भूतमानी चेति यतस्तत एव । एष ह वै यज्ञो योऽयं पवत इत्यत्र मुख्यप्राणो ह्युच्यते । तस्य मनश्च वाक्यवर्तनीति मनोवाग्यानत्वस्य भूतवायावभावात् । अयं वै ब्रह्म योयं पवते तमेताः पञ्चदेवताः परिम्रियन्त इति च ब्रह्मशब्दो भविष्यद्ब्रह्मणि मुख्यप्राणे एवं हि घटते न तु भूतवायौ । कथं महत्तत्त्वाभिमानिनो मुख्यप्राणस्य

भूताभिमानित्वमित्यत आह **माहामानीति**। दृश्यते हि राज्याभिमानिनो राज्ञः स्वभृत्याभिमतग्रामाद्यभिमानित्वम्। नान्यत् नान्यदा ॥ ५ ॥ कथं क्रम इत्याकाङ्क्षयामाह ॥ **तस्मादिति**। अशेषाः क इत्यत आह ॥ **सोमास्त्विति**। कथं वाय्वादीनां ब्रह्मादिपदं प्राप्यतां मुमुक्षतां प्रवेशो मुक्तिः स्यादित्यत आह ॥ **इतीति**। वेदवागहीन्द्रपत्नी महिषं चौमागिरीशाविति ब्रवीति। विरिञ्चपत्नीं विरिञ्चभारतीराविति ब्रवीतीत्यन्वयः। वाय्वादित्वकाल उपासितवतामधिकारिणां तेषु ब्रह्मादिपदं प्राप्तेष्वपि वाय्वादिशब्दव्युत्पत्तिमत्त्वाद्देवागादिशब्दैरपि तान्वदन्तीत्याशयः। स्यात्। किं वाङ्मनसीत्यादावुमागिरिशावुच्येते। तस्माद्गरुडमार्गवचनस्य कोऽवकाश इत्यत आह ॥ **इन्द्रेति**। भृग्वादय इत्यादिशब्दान्मरीच्यादयः। ये मनवो वैवस्वतादयः। पृथ्वादयो राजमुख्याश्च ते स्वायंभुवमनुं प्रविश्य तद्द्वारेण महेन्द्रं गता भवन्ति। तमेव धर्ममेव। तद्देहगता विष्णुदेहगताः। इष्टत इच्छातः। भावे क्तप्रत्ययदर्शनात्। तत्र तत्र सर्गक्रमकथनमपि मुक्तिक्रमानुमापकं भविष्यतीत्यभिप्रायेणाह ॥ **सर्गेति**। मुक्तौ क्रमस्य सर्गक्रमतो विपर्ययो भवेत्। सुराणां स्वबिम्बदेवतासूत्तरोत्तरः प्रवेशरूपो लयो भोगश्च मुक्तिरिति यत एतस्मादेव हि वेदपतिर्लय एव सर्गक्रमतो विपर्ययेणेत्यवदत्। मुक्तेरपि लय एवान्तर्भावादित्याशयः। पैङ्गिश्रुतिरप्येनं मुक्तिक्रममर्थात्प्रकटयतीत्यभिप्रायेणाह ॥ **उक्तश्चेति**। तेजोभिधामित्यादेरयमर्थः। भूतवृत्तिमाश्रित्य वायुशब्दशब्दितोऽयं ब्रह्मा सर्वमुक्तगणैः प्रविष्टः प्रथमतस्तेजोभिधां श्रियं केवलमाप्य विष्णुं प्रविश्य ततो विष्णोः पुत्रत्वेन देवीं प्रवेशरूपेण प्राप्ततया देव्या प्रसूतः पुनरपि विष्णुं प्रविश्येत्यर्थभावेन मुक्तो भूत्वा प्रलयकालेऽस्मिन्विष्णावेव तिष्ठति। सिंहावलोकनन्यायेन देवमोक्षशेषमाह ॥ **प्रयातीति**। मरुद्गणाश्च शक्रं प्रयान्ति। इत्थं वदति हि तुरश्रुतिः। इयमस्माभिः प्रपञ्चितैव मुक्तिरिति स्थितम् ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४—२ ॥ * ॥ * ॥

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ पादसङ्गतिं दर्शयति ॥ **उत्क्रान्तेति** । उत्क्रान्तानां मार्गो मुक्तानां गम्यं वस्तु चेति द्वयमस्मिन्पाद उदितम् । युक्तीरुभयीश्च दर्शयति ॥ **सुक्रमेति** । **अप्रतीकालम्बनानित्यादि**सूत्राभिप्रायमाह ॥ **प्रतीकामिति** । देहादिकमित्यादि-शब्दाच्चक्षुरादिकम् । अतोऽन्ये तद्व्याप्तिदर्शिनोऽपि प्रथमं विष्णुं प्राप्ता अपि परान्ते तं ब्रह्माणमाप्य तेन सह तल्लोकाद्द्वारैं गता मुक्तिभाजो भवन्ति ॥ ६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतौ नयचन्द्रिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥ ४—३ ॥ * ॥ * ॥

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

अस्मिन्पाद उभयीश्च युक्तीश्च दर्शयति ॥ **अतिक्रमोक्तिरिति** । **अत एव चानन्याधिपति**रित्यस्याभिप्रायमाह ॥ **अनन्य-भृत्यत्वमिति** । इह शास्त्रे । परमोऽधिपतिस्तेषां विष्णुरेव न संशयः । ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः । ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् । आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् । एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशय इति वाराहे । उतामृतत्वस्येशान इति हरेर्मुक्तजातेरपि स्वामित्ववाक् । मुक्ता अन्याधिपतित्वयुक्ता विष्णवन्याचित्त्वावथा संसारिणः । अथैतदेवं विद्वान्साम गायत्युभौ । स साम गायति । सोऽमुनैव । स एष एवास्मात्पराञ्चो लोकास्तांश्चाप्नोति । देवकामांश्चाथोऽनेनैव । ये चैतस्मादर्वाञ्चो लोकास्तान्याप्नोति मनुष्यकामांश्चेति श्रुतिराह । एष आदित्यस्थपुरुषवेदकः । ये चामुष्मादादित्यादुपरितनमुक्तास्तान्नियच्छति । मुक्तदेवानामभीष्टार्थांश्च प्रापयति । सोऽमुनैव सोऽमुष्य प्रसादेनैवं भवति नात्मशक्त्या । अक्षिस्थपुरुषवेदकश्चास्य प्रसादेन य एतस्मादधस्तनमुक्तास्तान्नियच्छति । मनुष्याणामभीष्टार्थांश्च प्रापयति यथायोग्यम् । कण्यासः पद्मर-

क्ताक्षः सूर्यगश्चाक्षिगश्च सः । गायकस्तस्य विष्णोर्यः स स्वर्ग्यांश्चनृलोकगान् । कामान्दद्यान्नरश्चेत्स्यात्सुराणां च नृणामपि । मोक्षदो यदि वायुः स्यान्मुख्योद्गाता ततोऽनिल इति सत्तत्त्व इति । उदैति हि सर्वेभ्यः पाप्मभ्यो य एवं वेदेति सर्वाशुभनाशनलिङ्गादतल्लोकैश्वर्यं मुक्ताविप्येवाङ्गीकर्तव्यम् । ता यो वेद स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्तीत्यत्रोच्यमानं सर्वदेवपूज्यत्वं च ब्रह्मणोऽन्यस्य नोपपद्यते हि । लोकशब्दार्थमाह । लोका इति प्रस्तुत्यान्योन्यनाथा इति हि पैङ्गिश्रुतिः । लोकविलक्षणत्वादलोकशब्देनापि मुक्ता वाच्याः । पराञ्चोलोका इत्यादौ तादृशं पदवचनं च युक्तम् । आलोकरूपत्वाच्च लोकशब्द वाच्यत्वं घटत इत्याह ॥ **लोकाभिधा इति** । नन्विह सोऽमुनैवेत्यादौ ज्ञानफलत्वेनोक्तं लोकाधिपत्यं रविबिम्बगे हरावैक्येन स्याज्ज्ञानिनः । स आदित्यरूपेणैव तथा भवतीत्यत आह ॥ **न चेहेति** । स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे । देवकामानां च स एष एतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेत्यपुरुषाक्षिपुरुषयोर्लोकाधिपत्यं पुरैव पृथगुक्तं हि । तदैक्यपक्ष एतद्वचनस्य पुनरुक्तित्वं स्यादित्याशयः । यथा बदरिकानाथ द्वारकानाथ इत्यपि अवाङ्नाथ इति तद्वदिहोच्यते । सर्वनाथोऽपि भगवान् सान्निधानविशेषत इति मानसे । सोऽमुनैवाथानेनैवेत्यादित्यपुरुषाक्षिपुरुषयोर्ज्ञानिनोऽनुग्राहकत्वेन सम्यग्भेदश्चोक्तः । सोऽदस्त्वेनेत्यादित्वप्रत्ययमतिहाय वर्तमानस्य सोऽमुनैवेत्यादिवाक्यस्यादित्यपुरुषाक्षिपुरुषरूपेणेत्याद्यर्थो नैव भवेत् ऐक्यपक्षे तु भवत्यसौ भवत्ययमित्यणुवाक्यं विहाय बहूनि वाक्यानि वृत्तानीति तेषां वैयर्थ्यस्य दोषः स्यान्मायिनः । **जगद्व्यापारवर्ज्यमिति** सूत्रस्याभिप्रायमाह ॥ **अत इति** । जगद्व्यापारवत एव क्रमेण यथायोग्यं स्वातन्त्र्यादिपूर्णगुणा ब्रह्मादयः । अत उक्तभङ्ग्या मुक्तस्य जगद्व्यापारवर्जितत्वात् ॥७॥ * *

आत्मनः परमाभीष्टाय केवलगुरुवे नमस्करोतीमां ग्रन्थकृतिमुपसंहरन् ॥ **नमो नम इति** । लोके मित्रादय उपकाराद्युपाधिना प्रिया भवन्ति । अस्य श्रीमन्मध्वस्य तु पुरुषोत्तमगुणाः केनाप्युपाधिना न प्रियाः । किन्तु स्वभावत एव तदाह ॥ **अनुपाधिप्रियसद्गुणात्मन इति** । गुरुस्वरूपं जानतां हि गुरुभक्तिद्वारेण विद्या फलतीत्यभिप्रायेणात्मस्वरूपसंवेदनपूर्वकामिमं ग्रन्थं केशवे समर्पयति ॥ **यस्येति** । यस्य वायोर्बलित्थे-

त्यादिवेदवचने त्रीणि रूपाण्युदितानि दिव्यानि स्तुत्यानि। यस्य देवस्य महद्रूपं मूलरूपमित्थमेव निहितम्। श्रीमन्नारायणेन त्रयाणां वपुषां प्रादुष्करणार्थमेवं क्लृप्तम्। तन्मूलरूपं कीदृग्भूतमित्याकाङ्क्षायामाह ॥ **बळित्थेत्यादि** । बट् बलरूपं ततत्वात्तत् दर्शतमतिशयेन दर्शरूपम्। प्रातिलोम्येन तृतीयात्। तृतीयस्याप्यतिशयार्थत्वात्। दुष्टान्भर्जयतीति भर्गः। त्रीणि रूपाणि कानीत्याकाङ्क्षायामाह। प्रथमं रामवचोनयं हनूमद्रूपमित्यर्थः। द्वितीयं वपुः पृक्षः। सम्प्रक्तत्वात्पृतना पृथगित्युच्यते। तां क्षयतीति पृक्षः। भीमसेन इति यावत्। तृतीयं मध्वः। मधुशब्द आनन्दवाची। कामानलमधुलवैः शमयन्दुरापैरित्यादौ दृष्टत्वात्। अकारो तीर्थवाची पापप्रतिषेधत्वार्थस्य। अथवा वकारस्तीर्थवाची। तस्यामृतवाचित्वेन जलवाचित्वसम्भवात्। एवं मध्व आनन्दतीर्थः। यत्त्वेतत् यत्तु देशकालाभ्यां सन्निकृष्टं मध्वाख्यं तृतीयं वपुः। अमुना रूपेण तेन वायुना केशवे ब्रह्मसूत्रानुभाष्यात्मको ग्रन्थः कृत इति। अत्र बटित्यादिना बळित्था तद्वपुषेऽधायि दर्शतमित्यादिवचनं च सूचयति। तथा च भाववृत्ते। हनशब्दो ज्ञानवाची हनूमान्मतिशब्दितः। रामस्य वृत्तरूपस्य वाचस्तेनानयन्त हि। पृतनो भीम इत्युक्तो वाचोमामातरः स्मृताः। ऋगाधा इतिहासं च भारतं पञ्चरात्रकम्। प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः। मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्। मध्व आनन्दतीर्थः स्यात्तृतीया मारुतीतनुरिति सूक्तगतम्। रूपत्रयमेतन्महात्मनः। यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादत इति। साधको रामवाक्यानां तत्समीपगतः सदा। हनूमान्प्रथमो ज्ञेयो भीमस्तु बहुमुक्पितोः। पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः। पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः। दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते। प्रज्ञा प्रमितिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः। आसमन्तात्पतित्वेन गूढं कलियुगे हरिम्। असत्यमप्रतिष्ठं च जगदेतदनीश्वरम्। वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति। येन विष्णोर्हि वर्पाख्यान्गुणानज्ञासिषुः परान्। ईशानाशः सूरयश्च निगूढान्निर्गुणोक्तिभिः। त्रेतायां द्वापरे चैव कलौ चेति क्रमाच्च यः। एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः। स्वयम्भुर्ब्रह्मसंज्ञोऽसौ परोऽस्मै ब्रह्मणे नम इति यजुःसंहितायाम्।

